यदाश्रौषं कर्णमासाद्य मुक्तं
वधाद्भीमं कुत्सयित्वा वचोभिः ।
धनुष्कोट्या तुद्य कर्णेन वीरं
तदा नाशंसे विजयाय संजय ॥ १३९

यदा द्रोणः कृतवर्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च शूरः ।
अमर्षयन्सैन्धवं वध्यमानं
तदा नाशंसे विजयाय संजय ॥ १४०

यदाश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय संजय ॥ १४१

यदाश्रौषं कर्णघटोत्कचाभ्यां
युद्धे मुक्तां सूतपुत्रेण शक्तिम् ।
यया वध्यः समरे सव्यसाची
तदा नाशंसे विजयाय संजय ॥ १४२

यदाश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय संजय ॥ १४३

यदाश्रौषं द्रौणिना द्वैरथस्थं
माद्रीपुत्रं नकुलं लोकमध्ये ।
समं युद्धे पाण्डवं युध्यमानं
तदा नाशंसे विजयाय संजय ॥ १४४

यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान्पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १४५

C. 1. 201
B. 1. 1. 209
K. 1. 1. 227

°नीके. $G_2$ युध्यमानान्; M (except $M_{1.8}$) °ध्यमानं. — $^e$) $K_6$ Dr (except $Dr_3$) $D_{14}$ $T_2$ G (except $G_7$) यांतं. $K_2$ कर्णं (for वार्ष्णेयं). $Dr_4$ तत्र (for यत्र).

139 $^b$) $D_{2-4}$ भयाद्भी°; $G_7$ तदा भी°. K (except $K_{5.6}$) Da गर्ह° (for कुत्स°). — $^c$) $D_5$ °द्व्याकृष्य कर्णो नृवीरं.

140 $D_3$ om. 140; $G_{3.7}$ $M_1$ om. 140–1. — $^a$) S ($G_{3.7}$ $M_1$ om.) यदाश्रौषं कृ°. — $^b$) $M_{2.4}$ द्रोणो द्रौ°. $D_1$ °राजोथ शू°. $K_2$ वीरः; $G_{2.4}$ संख्ये; $G_{5.6}$ संघे (for शूरः). — $^c$) G (except $G_1$; $G_{3.7}$ om.) नारक्षन्यत्सैंधवं. $D_{10.11}$ मथ्यमानं.

141 $G_{3.7}$ $M_1$ om. 141 (cf. v. l. 140). S (except T $G_1$, and $G_{3.7}$ $M_1$, which latter om. 141) transp. 141 and 142; $G_5$ (hapl.) om. $141^a$, the prior half of $141^b$, the latter half of $142^b$ and $142^{cd}$. — $^b$) $K_1$ $D_{6.8.9}$ °क्तिं ध्वंसितां. $G_{2.4.6}$ शक्तिं मुक्तां शंकितां मा°. — $^c$) $K_6$ रक्षसि. $D_{6-12}$ °रूपां.

142 For the sequence of G and M cf. v. l. 141. — $^b$) $K_6$ द्वंद्वे; Dn $D_{10.11}$ $G_2$ युक्ते (for युद्धे). — $^c$) $K_5$ $D_8$ $T_2$ $G_{6.7}$ यथा; $G_{2.4}$ $M_4$ यदा (for यया).

143 $^a$) $K_2$ द्रोण आचार्यवर्यं. — $^b$) $B_{1.4}$ $D_{12.14}$ °म्नेन व्यति°; $B_2$ Da $D_{6-9}$ °म्नेनाव्य°; $B_3$ °म्ने स्वं व्य°; $D_{3.4}$ °म्नेन स्वं व्य°; $G_6$ °म्नेन ह्य°. — $^c$) $K_1$ विवशस्तं; $K_5$ $B_1$m $D_8$ $G_6$ विशस्तं.

144 $D_{10}$ om. 144. $K_{1.2.8}$ transp. 144 and 145. — $^a$) Dn3 $D_5$ $G_3$ वै (for द्वै-). — $^b$) K (except $K_{1.4.5}$) $V_1$ D (except Da Dr $D_5$; $D_{10}$ om.; $D_{13}$ missing) माद्रीसुतं. $T_1$ यूथमध्ये; $T_2$ $G_6$ M योध° ($M_1$ यौध°). — $^c$) $K_5$ स्थितं युद्धे. $K_{3.6}$ $G_2$ युद्धं; $G_6$ सम्यक् (for युद्धे). $K_6$ B D ($D_{10}$ om.; $D_{13}$ missing) मंडलश्चरंतं ($D_1$ मंडलेनश्चरंतं; $D_5$ as in text; $D_{6-9.11.12}$ मंडलं संचरंतं); $V_1$ मंडलेभ्यश्चरंतं (for पाण्डवं यु°). $D_{14}$ °वं श्लाघमानं. — After 144, $K_3$ reads 147 and $K_1$ ins. 54* (cf. v. l. 145).

145 $K_{1.2.8}$ transp. 144 and 145. — $^a$) $D_5$ $M_1$ यदाश्रौषं; $G_{1.2.4.5}$ तदा (for यदा). — $^b$) $K_3$ °स्त्रमकुर्वन्; $K_5$ $D_{10}$ (वि over प्र) $M_4$ °स्त्रं प्रकु°. — $^c$) $D_{14}$ $G_3$ कृत° (for गत°). — $K_{2.4.6}$ Dn Dr $D_{1.2.6.8-11}$ ins. after 145: $K_1$, after 144: $K_{0.8}$ $D_{3.4}$, after 147:

54* यदाश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय संजय ॥

[ $^c$) $K_{0.2-4}$ न तमन्येन; $K_6$ रणमध्ये न; $D_2$ रणभीमेन. ]

$K_8$ cont.:

55* यदाश्रौषं भीमकर्माणमुग्रं
रणे भीमं शोणितं पीतवन्तम् ।
भित्त्वा वक्षो युवराजस्य सूत
तदा नाशंसे विजयाय संजय ॥

C. 1. 208
B. 1. 1. 205
K. 1. 1. 229

यदाश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन्भ्रातॄणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय संजय ॥ १४६

यदाश्रौषं द्रोणपुत्रं कृपं च
दुःशासनं कृतवर्माणमुग्रम् ।
युधिष्ठिरं शून्यमधर्षयन्तं
तदा नाशंसे विजयाय संजय ॥ १४७

यदाश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत ।
सदा संग्रामे स्पर्धते यः स कृष्णं
तदा नाशंसे विजयाय संजय ॥ १४८

यदाश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं संग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय संजय ॥ १४९

यदाश्रौषं श्रान्तमेकं शयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नदर्पं
तदा नाशंसे विजयाय संजय ॥ १५०

यदाश्रौषं पाण्डवांस्तिष्ठमाना-
न्गङ्गाह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय संजय ॥ १५१

यदाश्रौषं विविधांस्तात मार्गा-
न्गदायुद्धे मण्डलं संचरन्तम् ।
मिथ्या हतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय संजय ॥ १५२

यदाश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान्पाञ्चालान्द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय संजय ॥ १५३

146 B4 D5.7.12 om. 146. K5 Cd transp. 146 and 147. — a) V1 कर्णमासाद्य शू°. — b) K4 °वे दुःप्रधृष्यं. D14 °प्रसह्यं; G (except G6) °प्रमत्तं. — c) K5 यस्मिन्. V1 चैव युक्ते; D6.8–11 °युक्ते; G3.7 °तुल्ये; Cd °गुह्ये (as in text).

147 B4 D8 om. 147. K8 reads 147 after 144; K5 Cd transp. 146 and 147. — a) Dn °त्रं च शूरं. — After 147a, folium partly damaged in K5. — G7 om. 147cd. — c) D14 यौधिष्ठिरं. K1.5 Dn D1 धर्मराजं जयंतं; K3 M1 शूरम°; K6 सैन्यममर्ष°; D14 सैन्यम°; T G1 M2–4 स्वयमेवासहिष्ट (T2 °वसहिष्ण); G2.4–6 शूरममर्ष°; G8 शूरमनाः प्रधृष्यं. Cd अमर्षयंतं. — After 147, G7 reads 150 and K0.3 D3.4 ins. 54* (cf. v. l. 145).

148 G7 read 150–1 between 147 and 148. — a) K5 °षं मद्रराजं हतं वै. — b) K1 युद्धां श्रेष्ठं धर्म°. M1 °न युद्धे. — c) K0 स्म; K6 D5.14 च; V1 Dn D1.2 G1.2.6 तु (for स). D14 कर्णं (for कृष्णं).

149 a) K1–4 B4 Dr D4.5.9–11 T2 G (except G3.6) M1 कलहं. — b) K5 मायाविनं सौ°. D14 पांडवानां. — c) K4 रणे (for संग्रामे).

150 In G7, 150 follows 147 (cf. v. l. 148). — a) K1–5 V1 Dr D2–4.8 G1.2.6 शांतमेकं; T1 °मेनं; G2 शोकमध्ये; G7 शांतवेशं. — bc) K1 transp. ह्रदं गत्वा (in b) and दुर्योधनं (in c). K0.1.4 D14 भग्नपक्षं; K5 V1 B1.2.3m D (except D5; D13 missing; for D14 see above) °शक्तिं; K6 B3.4 T1 °सक्थि; G3.7 °सैन्यं.

151 D14 om. 151. — a) K2.3 D9–11 Cd °ष्ठमानं. — b) K1 V1 B D (except D3.4; D13 missing; D14 om.) गत्वा (for गङ्गा-). D6–12 ह्रदं (for ह्रदे). K6 ह्रदं गत्वा वा°. — c) G1 अमर्षि°. K0.3.4 Dn Dr2–r4 D1.2.6.8.9.11.12 M2.3 धर्षयंतः; K2 Dr1 D7 धर्मयं°; K5 मर्पयं°; K0 (m कर्ष) यं°; Da वर्षयं°; D4 मर्ष°. K4 सुहृत्सु; G6 सुतान्मे. G3.7 अमर्षिणा भीमसेनेन यांतं. — In G7, 148 follows 151 (cf. v. l. 148).

152 a) K0 °धान्सूत; K1 °धां शस्त्र-; K4 B D (except D5.14; D13 missing) °धांश्चित्र-; M1 °धान्साधु-. — b) K1 गत्वा युक्तं; B1 D3 तदा युद्धे. K1 मंडलैः सं°; K3 Dr1 मंडलेशश्च°; K4.6 मंडलान्सं°; K5 मंडलान्धाश्च°; V1 D5 मंडलांश्चैव कृत्वा; B Da Dn Dr3–r4 D1–4.6.7.12 T M1 मंडलशश्च°; M2–4 मंडलतश्च°. — c) V1 हतं राजानं (for मिथ्या हतं).

153 a) Dr1 °श्चाश्रितैस्तैः. — b) T1 G1 हत्वा; G3 सुतान् (for हतान्). K0.6 Dr1.r3 D1.12 पंचालान्; D3–5.14 G3.7 बालान्. D5 °देयान्सुसुप्तान्; D14 °देयाश्चसु°. — c) D14 कृतं वै बी°. G2 बीभत्सुमथ शक्यं च; G3 °त्सुमशक्यंस्तं च; G7 °त्सुमथ°.

यदाश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषीकमवधीयेन गर्भं
तदा नाशंसे विजयाय संजय ॥ १५४
यदाश्रौषं ब्रह्मशिरोऽर्जुनेन
मुक्तं स्वस्तीत्यस्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय संजय ॥ १५५
यदाश्रौषं द्रोणपुत्रेण गर्भे
वैराट्या वै पात्यमाने महास्त्रे ।
द्वैपायनः केशवो द्रोणपुत्रं
परस्परेणाभिशापैः शशाप ॥ १५६
शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा वध्वः पितृभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥ १५७
कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं पाण्डवानां च सप्त ।
द्व्यूना विंशतिराहताक्षौहिणीनां
तस्मिन्संग्रामे विग्रहे क्षत्रियाणाम् ॥ १५८
तमसा त्वभ्यवस्तीर्णो मोह आविशतीव माम् ।
संज्ञां नोपलभे सूत मनो विह्वलतीव मे ॥ १५९

C. 1. 217 B. 1. 1. 2 K. 1. 1. 24

154 ab) D14 °सेने तु याते अश्व°. K0 वरमस्त्रं; K4 दिव्यम°; D1 परम°. — c) K1 °कमावधी°; V1 D14 °केनाव°; G1.2.4.5 °कं नाव°. K5 °धीदुत्तरायाश्च गर्भं. G3 °कं तं निपात्यैव ग°; G7 °कं तं निहत्यैव (om. गर्भं); M °कं नावधीत्तं तु ग°.

155 a) Da °षं भीमशिरो°. — b) V1 सूक्तं; B2m.3m T M4 मुक्त्वा. G6 °त्युग्र° (for °त्यस्त्र°). K2 मुक्तं स्वस्तीत्युक्त्वा ह्यस्त्र°; K4 स्वस्तीत्युक्त्वा त्वस्त्र°; K6 D (D13 missing; for D14 see below) स्वस्तीत्युक्त्वास्त्रम् (Dr1.r4 °क्त्वा चास्त्रम्; D2 °क्त्वा शस्त्रम्; D3 °क्त्वामस्त्रम्; D4 °क्त्वा अस्त्रम्; D5 °क्त्वा ह्यस्त्रम्; D11 °क्त्वास्त्रयम्) अस्त्रेण (D7.12 शस्त्रेण); M3 मुक्त्वा स्वस्तीत्युक्तमात्रेण. D14 मुक्तं ब्राह्ममस्त्रं प्रशांतं. — c) K1 मौलिरत्नं. V1 D14 च युक्तं; T1 G च मुक्तं.

156 b) K2.3.4 (before corr.) Dn3 वैराट्यां. B1.4 Da पाट्यमाने; D10.11 M1 पाद्य°; G7 बाध्य (om. माने). K0 B (except B2) D (except D3.4.14; D13 missing) G6 महास्त्रैः. — D10.11 T1 G1.2.4.5 ins. after 156ab:

56* संजीवयामीति हरेः प्रतिज्ञां
तदा नाशंसे विजयाय संजय ।

— c) K0.3.5 D5.14 M1 °यनं केशवं. — d) K0.2.4 (before corr.) शपानान्; K1 शशायं (sic); K3 प्रपन्नान्; D5 प्रपन्नं; D9-11 S शपेतां (G7 रपेतां; M1 शपंतः); D14 शपंतं (for शशाप). — D6.8 T1 G2.4.5 ins. after 156:

57* बुद्ध्वा चाहं बुद्धिहीनोऽद्य सूत
संतप्येऽहं पुत्रपौत्रैश्च हीनः ।
संचिन्तयंश्चाद्य विहीनबुद्धिः
कर्तव्यतां नाभिजानामि सूत ॥

[ D6.8 read (in b) °तप्ये वै, (in c) °चिंतयानोद्य, (in d) °तां चाभि°. ]

157 b) K1.3 V1 B D (D13 missing) बंधुभिः पितृ° (D5 सर्वैर्बंधु°; D11 as in text); K2 -विधा पि°; K4 वधः पि°; K5 T2 G1.2.4-6 M2.4 वध्वः पति°; K6 पितृभिर्बंधु°; G7 वध्वा सखि°; M1 वंश्यैः पि° (for वध्वः पितृ°). G3 तदावस्था सखिभिर्भ्रा°. T1 तदा नाशंसे etc. — c) V1 D5 G7 कर्म (for कार्यं). K6 दुस्त°; Dr (except Dr1) कौरवैः; D5.6.8 दुष्कृतं (for दुष्करं). — d) T1 °ज्यं चास°; G1.2.4.5 °ज्यं निःस°; G6 °ज्यं नास°. K1 °पत्नैः (for °पत्नं).

158 a) Da युद्धं (for युद्धे). T युद्धं हतशेषाः. K5 D8 °षाः सुता; G2.4.5 °षाः श्रुतं. G3.7 °षाश्च योधाः. — b) D5 पांडवेयाश्च. — c) V1 अष्टावि°. K3.5 V1 M1 विंशतिर्निहता°; K4 (before corr.) °तिर्हता°; D10.11 T1 G1.2.4.5 M2.4 °शत्सादिता°; D14 °शत्संहता°; M3 °शन्निहता°. D7.12 हता विंशतिरोहता°; D9 G3.7 न्यूना विंशत्सादिता°. K5 अष्टादशाक्षौहिणीनां हता वै. — d) K6 युद्धे; G2 ग्रामे (for संग्रामे). K4 तुमले; K3 V1 B D (for D5 see below; D13 missing) M2.3 भैरवे; T1 निग्रहो; T2 G4 (by corr.) निघ्नतां (for विग्रहे). D5 तस्मिन्युद्धे कौरवैः क्षत्रि°. — G2.4.5 ins. after 158:

58* कालाभिपन्ना समितिर्महात्मना
निषूदिता हेतुरासीत्सुतो मे ।

159 a) K0.2 स्वतिवि°; K3 त्वेतिविस्तीर्णे; K4 त्वद्य विस्तीर्णे; K5 G5 त्वभ्यवि°; T M संवृतस्तूर्णं (M1 as in G1 below); G1 स्त्वभ्यवस्तीर्णे; G2 स्त्वभ्य°; G3.7 बहुविस्तीर्णे. K1 V1 B D (D13 missing) तमस्त्वतीव विस्तीर्णे (D5 यत्संस्मृत्य विस्तीर्णे; D14 तमसांधस्य वि°); K6 तमस्त्वतीव वि°. Cd तमसा (as in text). — b) D3.6 मोहमा°; D5 तमंश्चावि°. M (except M1) मा. — c) K1.6 D1 संज्ञा; G (except G3.6.7) ज्ञानं. T1 नो लभते; T2 G6 नैव ल°.

C. 1. 217 B. 1. 1. 2[illegible] K. 1. 1. 2[illegible]

इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहु दुःखितः ।
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् ॥ १६०
संजयैवंगते प्राणांस्त्यक्तुमिच्छामि माचिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥ १६१
तं तथा वादिनं दीनं विलपन्तं महीपतिम् ।
गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत् ॥ १६२
श्रुतवानसि वै राज्ञो महोत्साहान्महाबलान् ।
द्वैपायनस्य वदतो नारदस्य च धीमतः ॥ १६३
महत्सु राजवंशेषु गुणैः समुदितेषु च ।
जातान्दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः ॥ १६४
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाप्तदक्षिणैः ।
अस्मिँल्लोके यशः प्राप्य ततः कालवशं गताः ॥ १६५
वैन्यं महारथं वीरं सृञ्जयं जयतां वरम् ।
सुहोत्रं रन्तिदेवं च कक्षीवन्तं तथौशिजम् ॥ १६६
बाह्लीकं दमनं शैब्यं शर्यातिमजितं जितम् ।
विश्वामित्रममित्रघ्नमम्बरीषं महाबलम् ॥ १६७
मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ।
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् ॥ १६८

K8 D2.7.10–12.14 °लभेत् (for °लभे). G (except G6) °भे वीर. — $^{d}$) T2 विज्वल°.

160 Before 160, K1 B2 Dn Dr ins. सौतिरुवाच; D5 सूत उ°. — $^{a}$) K5 वै; G3.7 M -पि (for ऽथ). — $^{b}$) D5 विकल्पैर्बहु. B3 T भृशदु:°; D14 G6 च सुदु:°. — $^{c}$) G7 °राश्वस्य. — After 160, K6 D1.2.4.8–11 repeat $96^{ab}$ (v. l. सर्वं त्वं for मे सर्वं).

161 Before 161, K6 B3 (marg.).4 Dr D1.5.6.14 T1 ins. धृतराष्ट्र उवाच. — $^{b}$) G6 धर्तुमिच्छा°. — $^{cd}$) K1 चापि; K6 तत्र; B4 ह्यत्र; D14 वापि; G2 ह्येत्र (for ह्यपि). M1 च (for न). K6 जीवस्य धा°. D5 स्तोकं कालं तु दुःखेन जीवितुं नोत्सहे ह्यहं.

162 Before 162, K4 (marg.).6 B D (except D5; D13 missing) ins. सौतिरुवाच. In D5, 162 is ins. in marg. — $^{a}$) T1 G6 M2.8 तमेवं वा°. K (except K6) V1 D5 विह्वलं (for वादिनं). D14 दुःखात् (for दीनं). — $^{b}$) B2 m मुहुर्मुहुः (for मही°). — N (except K0 D5; K4 marg. *sec. m.*; D13 missing) T1 ins. after $162^{ab}$:

59* निःश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः ।

[ K6 V1 विमुह्यंतं मुहुर्मुहुः; D (except Dn Dr D5; D13 missing) °मानं मुहुर्मुहुः. ]

— $^{c}$) K1 गव्लगनि°; K5 – – वानि°; B1 (m as in text) D2 °ल्गनि°; D4 °द्गणि°; D7.12 °ल्वानि°; G2.3.5.6 °वत्गणि°. D3 इदं श्रीमान्; G अदीनात्मा (G6 अयं धी°). — $^{d}$) T2 संजयो वा°.

163 Before 163, K2.6 B D (except Da; D13 missing) ins. संजय उवाच; T2 G संजयः. — D5 om. 163–$189^{cd}$, ins. marg. त्रुटिपत्र एकपत्र द्विव. — $^{ab}$) D9 G2.3.7 °वानस्मि. V1 B D (except Da D2–4; D5.13 missing) G6 M3 वै राजन्; T राजेंद्र; G1–3 M2.4 मेधावी; G7 मेधाविन्; M1 राजंस्त्वं. G2.3.7 °त्साह महाबल; M1.3 °त्साहान्महात्मनः. K5 श्रुतवानस्मि वदतो * * * * महाबल (rest missing). — $^{c}$) G6 °स्य वचनात्. — $^{d}$) K1 महार्हस्य च.

164 D1 om. 164–$165^{ab}$. — $^{b}$) Dr (except Dr1) प्रमुदि°. G4.5 °तेन च. — $^{c}$) K3 ज्ञानदि°; G (except G1) जाता दि°. K6 °स्त्रपुषः; G7 °स्त्रकुशलाः.

165 D1 om. $165^{ab}$. — $^{b}$) K5 Dr4 D6–10.12 °ष्ट्वा सदक्षिणैः; D14 °ष्ट्वा सुद°. — $^{d}$) K1 गता; K5 °तः; B D (D5.13 missing) °तान्.

166 $^{a}$) K0 वैश्यं; K1.5.6 V1 B D (except D9–11; D5.13 missing) T1 G4 शैब्यं; K4 चैत्यं (for वैन्यं). G1.4.5 वीर. T2 G2.3.7 युवनाश्वं महावीरं. — $^{b}$) K0.1.5 Dr1 D1 G3.7 संजयं. D1 यजतां. — $^{d}$) K0 काक्षिवंत तथोसिजं; K1 कौकवंतं तथौषिजं; K2 B3 D5 (before corr.).10 काक्षी° तथौ°; K4 काक्षिवं च तथौरसीजं; K5 कांक्षीवंतमुतौशिजं; K6 D14 °तं महौजसं; V1 B1 m.4 m Da D3.4 काक्षी° महौजसं; B1.2.4 काक्षी° तथौषिजं; Dn काक्षी° महाद्युतिं; Dr D2 काक्षी° तथोषिजं; D1 °तं महाद्युतिं; D6 काक्षी° ततोशिषं; D7 कांक्षी° ततोजिषं; D8 °तं ततोशियं; D12 काक्षी° ततोजिषं; T1 °वंतमथोशिवं; T2 °वंतमथौशिबिं; G2 °वंतमथो शिबिं; G3 कक्षवंतमथो शिबिं; G5 कक्षवंतं त°; G6 M कक्षीवंतमथौ° (M1 °वंतमथो जितं); G7 °तं तथा शिबिं.

167 $^{a}$) K2 Da G2 बाल्हिकं. K5 वैश्यं; K6 B D (D5.13 missing) T1 G6 M4 चैद्यं (Dn चैव); V1 as in Dn; G1 वैन्यं (for शैब्यं). — $^{b}$) D9–11 G2.4 (before corr.) शय्याति°; G1 शयाति°; M2 शंयाति°. K1.3.4.6 V1 B D (D5.13 missing) नलं (Dn3 नृपं) (for जितं). K0 सह्यं हिमजितं नलं; K5 तथा सायातिमूर्तिजं; G6 शर्यातिं च शिबिं नळं; M1 महाजिमजितं धर्मं. — $^{c}$) T °त्रहरिश्चंद्रं. — $^{d}$) K1 महारथं (for °बलम्).

168 $^{a}$) K3.4 Da मरुतं. K2 मरु°; D3.4 मंद° (for मनु°). — $^{b}$) G6 शयं (for गयं). — $^{c}$) K1 M1 दशरथं.

ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ।
चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा ॥ १६९
इति राज्ञां चतुर्विंशन्नारदेन सुरर्षिणा ।
पुत्रशोकाभितप्ताय पुरा शैब्याय कीर्तिताः ॥ १७०
तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ।
महारथा महात्मानः सर्वैः समुदिता गुणैः ॥ १७१
पूरुः कुरुर्यदुः शूरो विष्वगश्वो महाधृतिः ।
अनेना युवनाश्वश्च ककुत्स्थो विक्रमी रघुः ॥ १७२
विजिती वीतिहोत्रश्च भवः श्वेतो बृहद्गुरुः ।
उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः ॥ १७३
दम्भोद्भवः परो वेनः सगरः संकृतिर्निमिः ।
अजेयः परशुः पुण्ड्रः शम्भुर्देवावृधोऽनघः ॥ १७४
देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः ॥ १७५ C. 1. 229 B. 1. 1. 235 K. 1. 1. 230

---

M (except M1) वीरं (for चैव). — d) K2.3.5 (before corr.).6 T2 G1-3.7 शशिबिंदुं. — K1.4 marg.6 (text and m) D (except Da D7.14; D5.13 missing) ins. after 168:

60* कृतवीर्यं महाभागं तथैव जनमेजयम् ।
[ D2 °र्यं च नाभागं. ]

169 b) K6 G2.3.7 याचितः. G1.4.5 शुभं; G2.3.7 M1.3 पुरा (for स्वयम्). — c) K5 G1.2.4-6 M2.4 चित्ययू°; T2 G3 चित्रयू°. Da °रूपांकिता. K1 चित्रयूपान्विता. — d) K5 सवनैः कृताः; D1 S (except G6 M1.3) °नार्णवा.

170 b) K1 महात्मनः; K3 D6.14 G1.4.5 मह°; G6 महात्मना (for सुर°). — d) K0.2.4 G6 M3 चैत्याय; K3 चैद्याय; V1 Dn3 M1.2.4 श्वैत्याय; D14 वैन्याय (for शैब्याय). B D (D5.13 missing) T1 G3 कीर्तितं; V1 G2 °ता.

171 a) K1 D1 T G4-6 M1.4 पूर्वे. — c) G (except G4.6) °बला (for °रथा). — d) K0 M1 सर्वे.

172 a) K2 G4.5 पूरुः पुरु°; K5 B3 Dn2 D10 पुरुः कु°; D14 कुरुः पू°; G1 पुरूः प°; G2 कुरूः पु°; G3 कुरुं पू°; G7 रुरुः पू°. T2 M1 transp. कुरुः and यदुः. Dr (except Dr1) °र्यदा शू°; D14 G (except G6) M1 °र्यदुर्वीरः. — b) K0 D2 विश्वक्सेनो; K2 B Dn Dr (except Dr1) D1.3.4.14 विश्व°; K3 °गर्भो; K4 °गस्त्यो; K5 विषगश्वो; G1.4.5 घृषभश्च; G2 वृषभश्यो; G3 विषगश्यो; G7 विषगश्च. K1 महायतिः; K6 °भूतिः; V1 Dn D1-4.6 G5 °द्युतिः; Da1 °वृसिः; M2.4 °रथः. — c) K1 अनीना; K3 °नश्च; K6 V1 B D (D5.13 missing) °णुहो (D2 °नुहो; D3.4 °न्वहो; D9-11 °नहो); G2.3.5.7 °नेन; G6 °नैना. — d) G2 काकु°. D10 S (except M2.3) °क्रमो. G (except G6.7) वसुः (for रघुः).

173 a) K0.6 Dr3 D1.2 विजितो वीतिहोत्रोंगः; K1 Dr2.r4 D14 °तो °होत्रांगः; K2 विजयो °होत्वांकः; K3 T1 G6 M1 °तिर्वीतिहोत्रोंगः; K4 विधृतिर्वीतिहोत्रोंगः; K5 °तिर्वीतिहोत्रागः; V1 विजयो वी°; Da M2-4 °तो वीति°; Dn विजयो °होत्रोंगः; Dr1 जीवितो °होत्रांगः; D3.4.8 °ती °होत्रोंगः; D6 °ती °होत्रांगः; D7.12 °ही वीतिहोत्रोंगः; D9.11 °ती °होत्रोंशः; D10 °ती °होत्रांशः; T2 विचित्री वी°; G1 °तिर्वीति°; G2-5.7 विदितिर्वीति°. — b) Dr1 D7.8.12 G4.5 M1 भवश्वेतो; T1 यौवनाश्वो; T2 G2.3 बृहच्छ्वेतो; G6 हय°; G7 बृहत्सेनो; M भृहत्भानुः (M1 भवश्वेतो). K5 T1 G1.4.5 बृहद्रथः; Dr1 भव°; M2 °द्बलः; M4 °त्फलः (for बृहद्गुरुः). — c) K1 श्वेत°; V1 °धनुः; D14 °रहः; T1 G7 शित°; T2 G2 °रुहः; G3 शीतरुहः; M1 °युगमः (for शतरथः). — d) K3 काको; T1 कण्वो; T2 कंहो; G1.4-6 कहो; G2 कुंभो; G3 कुंह्लो; for M see below. K1 द्रुविहो (sic); K2 दुहि°; K3 दंड°; K4 टलि°; K5 दु(corr. to डु)डिदुहो; Dr लोनि°; D2 दुलिवुहो; D3 लिभि°; D14 द्रुहिद्रहो; T1 दुविरुहा; T2 डुलिडुलो; G1 डुलिडुलो; for M see below. K1.5 D14 G1.4.6 द्रुहः; K2.3 दुहः; K4 द्रुदः; G3 द्रमः; G6 ध्रुवः (for द्रुमः). G7 गुह्यो हरिहयोद्यमः; M कण्डो (M2 कह्लो; M3 कण्वो; M4 कुह्लो) डुलिडुलो द्रुमः.

174 a) Dr1 देवोद्भवः; G1.2.4 M डंभो°; G3 जंभो°; G5 डिंभो°; G6 सहो°. K3 T2 तथा; D2 परा; G2.3 पटो; T1 पर; G4-6 M3 पुरो; M1 पुरा (for परो). K1 V1 B Da Dn Dr D1.7.12 वेणः (Dr1 वेणुः); K5 वैण्यः; K6 D14 वैन्यः; T1 स्वेतः; G7 वीरः; M1 वैनः (for वेनः). — b) Dr1 G2 सागरः; M4 सं°. V1 B4 Da T G1.4-6 M सांकृति°; D3 शंकृति°; G2 सागरी°; G3 सागरिर्निमः; G7 सागरी नि°. K5 समरः सत्कृतिः निसिः. — c) Da Dr पुरुपः; D14 °मः (for परशुः). K1 पौंडुः; K2 पुंढ्रः; K3 पौंढ्रः; K5 D10 पांडुः; B4 पुत्रः. — d) K0.4 शंकुर्; G7 शंखी (for शम्भुर्). K1 देवो वृध्रो; K2 देवो वृपो; B1 °वुधो; Dr (except Dr1) T2 °वृथो; D14 देवो नगो; T1 °पलो; G2 °ह्वधो; G3 °नयो; G4-6 °वृतो; G7 °ह्वयो; M1.4 °पृथो (for देवावृधो). B3 D7.12 नघ; D8 नवः (for ऽनघः).

175 ab) Dr °यश्चाप्रतिमः. D7.8 G2.3.7 °यः सुप्रतीको बृहदश्वो बृ°. G2 महद्रथः (for बृह°). — c) D1 नमिताश्वा; D14 वीतिताल: (for विनी°). — d) K1 सुकृतो नेपधो; K4 सुप्रभुर्नि°; K5.6 V1 °क्रतुर्नि°; D1 M4 सक्र°; G1 सुकृति°.

C. 1. B. 1. 1. 236 K. 1. 1. 251

सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः ।
जानुजङ्घोऽनरण्योऽर्कः प्रियभृत्यः शुभव्रतः ॥ १७६

बलबन्धुर्निरामर्दः केतुशृङ्गो बृहद्बलः ।
धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ॥ १७७

अविक्षित्प्रबलो धूर्तः कृतबन्धुर्दृढेषुधिः ।
महापुराणः संभाव्यः प्रत्यङ्गः परहा श्रुतिः ॥ १७८

एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
श्रूयन्तेऽयुतशश्चान्ये संख्याताश्चापि पद्मशः ॥ १७९

हित्वा सुविपुलान्भोगान्बुद्धिमन्तो महाबलाः ।
राजानो निधनं प्राप्तास्तव पुत्रैर्महत्तमाः ॥ १८०

येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च ।
माहात्म्यमपि चास्तिक्यं सत्यता शौचमार्जवम् ॥ १८१

विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः ।
सर्वर्द्धिगुणसंपन्नास्ते चापि निधनं गताः ॥ १८२

तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ।
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्शोचितुमर्हसि ॥ १८३

176 a) K1 शांतबलः; V1 T2 G1-3.7 M (except M1) °हयः; Dr (except Dr1) °नयः; G6 °भवः (for °भयः). — K0 om. 176bcd (omission begins with सुबलः) and 177a. — b) K6 D14 °लभः; G2.3 °स्खलः (for सुबलः). M (except M1) सुदृढः सत्यविक्रमः. — c) K4 T G6 M °नरण्यश्च; B4 °प्यरण्यो°. V1 जानुघण्टो नरोलर्कः. — d) D14 प्रियपुत्रः; G2.3.7 प्रियंगुश्च (for प्रिय°). M °बंधुर्दृढ° (M1 °भृत्यः शुचि°). K3 प्रिय°; K4 Dn D1 G6 शुचि°; B1 च सुश्रुतः (for शुभ°).

177 K0 om. 177a (cf. v. l. 176). — a) M1 जल°. K1.3.5 G4 निरामित्रः; V1 °मर्षः; Dr °नंदः; G2 °मर्शः; M (except M1) दुराधर्षः. K4 बालो बंधुरिरामित्रः. — b) G2.3 केतुश्रीको. M1 महाबलः. — cd) G1 सृष्ट° (for धृष्ट°). M1 transp. बृहत्केतुः and दीप्तकेतुः. K1 हस्ति°; K5 D3 दीप्ति°; T1 दिष्ट°; G2.3.7 दिव्य° (for दीप्तकेतुर्). K (except K5.6) अनामयः.

178 a) K1 अविक्षिश्चबलो; K2.3 °क्षिप्त°; K4 आविक्षित् चपलो; K5 °क्षर्ध°; V1 अरिक्षुर्च्यवनो; B °क्षिद्दु° (B3.4 °क्षिर्दुर्ब°); Da1 °क्षधव°; Da2 °क्षिद्ध्रुव°; Dn Dr D1-4.7.13 °क्षिच्चप°; D6.9 आवीक्षिच्चप°; D8 अवीक्षिच्चप°; D10.11 अवीक्षिच्चप°; D14 आमिक्षुः प्र°; T G1 °क्षि(T1 °क्ष)द्बलो; G2.3.7 अविक्षुः प्र°; G4-6 M1 अधिक्षुर्वल°; M3 अवीक्षिद्बल°; M2.4 अवीक्षिच्चल°. K4 बंधु; G2.3.7 भद्रः (for धूर्तः). — b) K (except K1.6) D2.6.14 °र्दृढेषुधीः; T1 G7 °र्धृतायुधः; T2 G1.4-6 M1 °र्दृढायुधः. G2 कृतबुद्धिर्दृढव्रतं; G3 °बुद्धिर्दृढायुधः; M4 °बुद्धिर्दृढे°. — c) K (except K6) °णः संहार्यः; B Da Dn Dr1 D1.6-12.14 T G1.2.6 °णसंभा°; G4.5 °णसंभाव्यः. — d) K6 G2 पत्यंगः; D14 सत्यंग-; G1 प्रत्यंगा-; M1 प्रत्यंग-. K1 S (except T1 G4.5 M2.4) पुरहा; Dn D1 परहः. K4 °वीरहा (for °हा श्रुतिः). V1 -न्तुचिः; B1m.2.3 Da Dr D3.14 शुचिः; G4.5 दधिः; G7 कृतिः (for श्रुतिः).

179 a) K6 B (B1m as in text) D (except D14; D5.13 missing) T1 G3 राजानः (for बहवः). — c) K4 V1 Dn3 D1.12.14 G शतशश्चा°; K6 बहवश्चा°. — d) M3 संघाता°. K5 चाति; K6 B D (except D14; D5.13 missing) चैव (for चापि). T G सर्वशः. M च महाबलाः (M1 as in T G above).

180 a) D9-11.14 T2 G4.5 भुक्त्वा. Dr D6 स; T M तु (for सु-). G7 हित्वानुपूर्वान्भूभागान्. — b) K0 बंधुमंतो; B Da Dr D3.4 G4.5 ऋद्धि°; D2 वृद्धि°. D14 M4 महारथाः. — d) K0 त्वत्पुत्रैर्ये महत्तराः; K2 त्वत्पुत्रेभ्यो म°; K3 M °र्महत्तराः; K4 त्वत्सुतेभ्यो महत्तराः; K6 B D (D5.13 missing) T1 तव पुत्रा इव प्रभो (D10 तव पुत्रैर्महात्मनोः; D14 as in K3 M); V1 तव पुत्रान्म°; T2 G1-3.4m.7 तत्पुत्राश्च म°; G4 तव पुत्रा म°.

181 a) Dr तेषां; D6.8.10 T1 G (except G1.3) ए°. D6.8 T2 transp. दिव्यानि and कर्माणि. — b) G2.3.7 °मश्चाढ्य ए°. M1 °मादागतानि च. — c) K4-6 D1.7 T1 महा°. V1 अति (for अपि). — d) K1 सौम्यता सत्यमार्जवं; K6 सत्यं शौर्यं क्षमा°; V1 B D (D5.13 missing) T G6 सत्यं शौचं दया° (Dn2 शौर्यं दमा°; D14 as in text); G2.3 सत्यं शौचमथा°; G5 °ता च दमा°; G7 M सत्यं शौचं दमा° (M1 सत्यं शौचं च मार्दवं).

182 In K2.3.5.6 V1 B D (except D14; D5.13 missing) 182ab is repeated after 191ab: in K1, before 191ab (q. v. for v. l.). — a) G2.3 धर्मिष्ठैः; G7 धर्मिष्ठो (for विद्वद्भिः). G3 लोकैः. — b) Dn D1 M2.3 पुराणे. G3 °णैरपि; M1 °णैर्ऋषि-. — c) K0.1.4 D14 सर्वे हि; K2 सर्वेपि; K3 धर्मार्थ-; K6 सर्वे वै; D13 सर्वे ह्रि-; G6 सुबुद्धि-; G7 सर्वार्थ-. T1 बाहुद्रविण°; M सर्वे द्रविण° (M1 सर्वे च गुण°). — d) G (except G6) ते च कालवशं ग°.

183 a) D10 °त्रा महा°. — b) K6 प्रनष्टा°; V1 °दीप्ता°. T1 चापि (for चैव). G2.3.7 प्राप्ता वै निधनं नृप. — c) D6 °वृत्ति°. D3.14 लुब्धान्दुर्वृत्तभूयिष्ठान्; G2.3 दुर्वृत्ता-वृत्तभू°; G7 दुर्वृत्तान्वृत्तभूयिष्ठ. — d) K0 न त्वं शो°.

श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः ।
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत ॥ १८४
निग्रहानुग्रहौ चापि विदितौ ते नराधिप ।
नात्यन्तमेवानुवृत्तिः श्रूयते पुत्ररक्षणे ॥ १८५
भवितव्यं तथा तच्च नातः शोचितुमर्हसि ।
दैवं प्रज्ञाविशेषेण को निवर्तितुमर्हति ॥ १८६
विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥ १८७
कालः पचति भूतानि कालः संहरति प्रजाः ।
निर्दहन्तं प्रजाः कालं कालः शमयते पुनः ॥ १८८
कालो विकुरुते भावान्सर्वाँल्लोके शुभाशुभान् ।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ।
कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥ १८९
अतीतानागता भावा ये च वर्तन्ति सांप्रतम् ।
तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि ॥ १९० C. 1. 244 B. 1. 1. 251 K. 1. 1. 275

184 $^{a}$) G3 अपि (for असि). M (except M1) °सि राजेंद्र. — $^{b}$) Ko Dr D14 G6 °सत्तमः; G2. 3 वाग्मिसं°; G7 ज्ञानसत्तमः (for प्राज्ञ°). — $^{cd}$) T1 G1. 2. 7 एषां. D14 S शास्त्रकृता (T1 °कृतिर्; G6 °गता; G7 M1 °कृतां). G7 बुद्धिं तत्ते. M (except M1) मानद (for भारत).

185 $^{ab}$) B2 चैव (for चापि). G2. 3. 7 चैव न कृतौ D10. 11 विहितौ. D14 नरर्षभ. — $^{c}$) K6 °मेव लिह्यंति; V1 °रम्या वृत्तिश्च; Da °मेव निर्वृ° (Arjp as in text); G2. 3 °वानुवृत्तं. Cd अत्यंतमेव निर्वृत्तिः. — $^{d}$) Ko. 2. 4 Dn कार्या ते; V1 T1 M4 श्रूयंते; Nīlp श्रूयते (as in text). K2 पुत्रकारणे; K5 (र over ल) V1 G3 °लक्षणे; G2 °लक्षणः.

186 $^{a}$) K1 ततः; K6 यथा; T1 G1 तदा (for तथा). Ko. 2 तद्धि; K5 तत्र; V1 -तेन; G3 तद्वत् (for तच्च). — $^{b}$) Ko. 2–4 V1 B D (D5. 13 missing) नानु- (D3. 4 न तान्; D11 as in text); K6 M1. 3 नात्र (for नातः). — After 186$^{ab}$, D6. 8 ins. (first time) 63* (cf. v. l. 190). — D7. 12 om. 186$^{cd}$. — $^{c}$) G M (except M1) पुरुषकारेण (G6 पूजाविशे°). — $^{d}$) Ko D14 T1 कोति°; B3 कोभि°; D1 G7 कोनु°. D8 G1. 2 °मर्हसि.

187 $^{a}$) K3 विधान-; K4 °धात्रा; D14 °धातुर्. — $^{b}$) B3 अभि° (for अति°). D14 कोतिवर्तितुमर्हति (cf. 186$^{d}$). — $^{c}$) D14 कालाधीनमिदं; G (except G6) कालः सृजति तत्. — $^{d}$) G7 °भावे. K5 G1 M सुखासुखौ; G6 °वहौ. — After 187, K1 ins. 61* (cf. v. l. 189).

188 $^{a}$) K6 करोति; Dn Dr D1. 3. 4 सृज°; D2 पिब°; M2. 4 चल°. — $^{b}$) Ko–2 V1 Dn D1 संहरते; M1 स ह°. — After 188$^{ab}$ (cf. v. l. 187), K5 D14 ins. 61* (cf. v. l. 189). — $^{c}$) K1 निर्दहंति प्रजाः काले; K3 संहरंतं प्रजा का°; K5 G7 °हन्वै प्रजाः काले; K6 D14 °हेत प्रजाः कालः; V1 T1 कालः प्रजा निर्दहति; B Da Nīlp °हति प्रजाः कालः; Dn संहरंतं प्रजाः का°; Dr D2–4. 6–9. 12 °हंति प्रजाः कालः; D1 °हति प्रजाः का°; D5. 13 missing; T2 G1 °हन्वा प्रजाः कालः; G2. 3 °हन्वै प्रजाः कालः; G4. 5 °हन्त्राः प्रजाः कालः; M1 °हन्वे प्रजाजा°. — $^{d}$) In D2, 188$^{d}$ is ins. in marg. D6. 8–11 सर्वाः (for कालः). Ko संशमते; K2. 3 शमयिता; K5 Dr (except Dr1) सम°; T1 सेव°. K1 कालश्च समये पुनः. — After 188$^{cd}$, K5 repeats 61* (cf. v. l. 189).

189 M1 om. 189$^{abcd}$. D5 begins again with 189$^{ef}$. — $^{a}$) K4 -धि-; K6 V1 B Da Dn D3. 4. 9 M (M1 om.) हि; T2 G (except G1. 7) -पि (for वि-). — $^{b}$) K2 Da D14 G2. 3. 7 सर्वलोके; V1 लोके सर्वान्; T1 °वान् लोक-; T2 °वान् लोकान्; G1 °वं लो°; G6 °वंलोक-. — $^{c}$) Ko G1 संक्षिप्यते; Dn3 °क्षियते; D3. 6 G2. 3 °क्षीय°; G7 °क्षिप्य°. K5 पूर्वं (for सर्वाः). T1 M (M1 om.) संक्षिप्य सर्वास्तु; T2 G6 संक्षिप्य सर्वास्तु. — $^{d}$) K1 विस्तरते (for विसृ°). — K1 (second time). 4 (marg.). 6 V1 B D (D13 missing; for D5. 14 see below) T1 ins. after 189$^{cd}$: D14, after 188$^{ab}$: K5 ins. first after 188$^{ab}$, and *repeats* after 188$^{cd}$:

61* कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।
[ V1 सुप्ते प्र°; D1 सुप्तो प्र°. ]

In D5 (in which 163–189$^{cd}$ are missing), 61* is preceded by:

संजय उवाच ।
62* अतीतानागतान्वापि वर्तमानांस्तथा बुधाः ।
नानुशोचन्ति राजेन्द्र कालो हि जगदन्तकः ।

— $^{e}$) M (except M1) जागर्ति (for भूतेषु). — $^{f}$) Ko D14 T1 °विकृतः; T2 G1–3. 7 °विधृ°; G4–6 °विर°. Ko स्वयं; K4. 6 °मं (for समः). K2 चरत्यतिवृतः सुखं; K3 °विकृतः समं; D2 °विधृतश्रमः; M (except M1) °विरतं सुखं.

190 $^{a}$) Ko. 2 °तान्भावान्; K3 °तान्भावा; T1 °ताभावान्. For D5 cf. v. l. 189. — $^{b}$) K1. 4. 6 वर्तते ये च सां°; K5 G6 ये वर्तंते च सां°. — $^{cd}$) K1. 5 D7. 12 तात्काल°; Dr1 G7 तत्काल°; G1. 2. 4. 5 °निर्जिता°. K1 M (except M1) ज्ञात्वा (for बुद्ध्वा). T1 G7 हंतु° (for हातु°). G3 तत्काल.

C. 1. 246
B. 1. 1. 253
K. 1. 1. 279

सूत उवाच ।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ।
भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ १९१
देवर्षयो ह्यत्र पुण्या ब्रह्मराजर्षयस्तथा ।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षमहोरगाः ॥ १९२
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥ १९३
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥ १९४
असत्सत्सदसच्चैव यस्माद्देवात्प्रवर्तते ।
संततिश्च प्रवृत्तिश्च जन्म मृत्युः पुनर्भवः ॥ १९५
अध्यात्मं श्रूयते यच्च पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं यच्च स एव परिगीयते ॥ १९६

निर्जितान्पुत्रानसंज्ञान्हातुमर्हथ. — After 190, K1.6 D (except Da D7.12.14; D13 missing) T G6 M2-4 ins.:

63* इत्येवं पुत्रशोकार्तं धृतराष्ट्रं जनेश्वरम् ।
आश्वास्य स्वस्थमकरोत्सूतो गावल्गणिस्तदा ।

After 190, G4.5 ins. the three lines given below: G1.3 M1, lines 1 and 2 only: G2 lines 2 and 3 only:

64* एवमुक्त्वा च राजानं संजयो विरराम ह ।
धृतराष्ट्रोऽपि तच्छ्रुत्वा धृतिमेव समाश्रयत् ।
दिष्ट्येदमागतमिति मत्वा स प्राज्ञसत्तमः ।

In T M2-4, 63* is followed by the second and third lines of 64*. In K4m Dr D4m.10.11, 63* is followed by 64*; G7 (which likewise contains all the five lines) interposes 63* between the first and the second lines of 64*. D6.8 ins. 63* also after 186$^{ab}$.

[ (63* L. 1) T नरेश्वरं. — (64* L. 2) D11 G1-5.7 M1 राजा च (for तच्छ्रुत्वा). K4 Dr समापयत्. ]

191 At the end of the preceding dialogue between संजय and धृतराष्ट्र, Da D14 T2 ins. सूत उवाच (as in text); K6 B Dn Dr D1.3-6.8-12 T1 सौतिरुवाच; G1.3.6.7 सूतः; the rest om. this ref. — Before 191, K4 Dr D4.10.11 T G4.5 M (except M1) ins.:

65* लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ।

— $^a$) G8 अर्थोप°; G7 अधोप°. — $^b$) K2 °द्वीपायनो. — In K2.3.5.6 V1 B D (except D11; D13 missing) 182$^{ab}$ is *repeated* after 191$^{ab}$: in K1 before 191$^{ab}$ (K3 V1 D5 पुराणैः; Dr D10.11 पुराणं; the rest पुराणे). — $^c$) K1 °नं पुण्यान्; B D (except D14; D13 missing) °नं पुण्यं. — $^d$) B3 °धीय च; B4 Da D1 °यत; G1 °यतां; M4 °यतं. — $^{ef}$) Da om. 191$^{ef}$. — After 191, T2 *repeats* lines 3-6 of 21* (cf. v. l. 23); then follow 13* and 4* and finally:

66* भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः ।
अज्ञानतिमिरान्धस्य कावस्था जगतो भवेत् ।

मतिमन्थानमाविध्य येन वेदमहार्णवात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः ।

192 $^a$) K0-4 V1 यत्र; G2 -रत्र; M1 -स्यत्र. K6 B D (D13 missing) देवा देवर्षयो ह्यत्र (Da देवा देवर्षयश्चैव; for D14 see below); K6 दिव्या देवर्षयो ह्यत्र. — $^b$) G (except G6) पुण्या (for ब्रह्म-). G6 तदा. M1.2 transp. ब्रह्म- and राज-. K6 B D (D13 missing) तथा ब्रह्मर्षयोमलाः (Dr ब्रह्मराजर्षयोमलाः; D8 तथा देवर्षयोमलाः; for D14 see below); T पुण्या ब्रह्मर्ष°. — In D14, the D reading of 192$^{ab}$ is ins. after the text reading (v. l. देवर्षयोत्र ये पुण्याः). — $^c$) G1.4.5 कथ्यंते. K (except K6) धुतपाप्मानः (for शुभ°). — $^d$) K2.4.6 Dn D1 G5 M (except M1) यक्षा; B3 सिद्ध-; G1 रक्ष-. V1 यक्षरक्षा म°.

193 $^b$) G1.2.4.5 M1 च (for ऽत्र). K1 °ते मात्र संशयः. K0 °तनं. — K0 (hapl.) om. 193$^{cd}$-194$^{ab}$. — $^c$) D6-9.12 सत्यव्रतं; G3 °व्रतः. — $^d$) T2 पवित्रः. K1 transp. पवित्रं and पुण्यं.

194 K0 om. 194$^{ab}$ (cf. v. l. 193). — $^a$) K3 परमं स्थानं; M परमं ब्रह्म (M1 हि परं ब्रह्म). — $^b$) T M परं ज्योतिः; G जगद्योनिं (G5.7 जगज्ज्योतिः; G6 as in T M). D1.6 °तनः. — $^c$) K5 शास्त्रा°; Dr (except Dr1) कार्या° (for कर्माणि). — $^d$) K Da प्रवदंति (K1 प्रसंसंति; K6 as in text). M1 महर्षयः (for मनी°).

195 $^a$) K3 V1 B D (D13 missing) असच्च सदसच्चैव (D14 °त्सदसतश्चैव); G1 °त्सदसदश्चैव; M1 °च्च सच्चैव च यत् (cf. 21). — $^b$) K3.4 यस्मादेतत्प्र°; K6 D14 G6 M1 °देव प्र°; B D (D13 missing; for D14 see above) °द्विश्वं प्र.; G3 °चैतत्प्र°. K6 तच्च विश्वं प्रसूयते. — G1 om. 195$^{cd}$-196. — $^c$) K3 प्रवृद्धिश्च; T1 °त्तश्च. ❀ Arj.: निवृत्तिरिति प्रमादपाठः ।❀ — $^d$) K5 जरा (for जन्म). K0.3 मृत्युः पुनः पुनः; K1 T G3.7 °त्युपुन°; K8 °त्यु पुनः पुनः; K4.6 V1 B D (D13 missing) °त्युपुनर्भवाः (Da °त्यू पुनर्भवाः; D5 °त्युभवाः पुनः; D11 °त्युपुनर्भगः); M °त्यू पुन°.

196 G1 om. 196 (cf. v. l. 195). — $^a$) V1 D14 S

यत्तद्यतिवरा युक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥ १९७
श्रद्दधानः सदोद्युक्तः सत्यधर्मपरायणः ।
आसेवन्निममध्यायं नरः पापात्प्रमुच्यते ॥ १९८
अनुक्रमणिमध्यायं भारतस्येममादितः ।
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति ॥ १९९
उभे संध्ये जपन्किंचित्सद्यो मुच्येत किल्बिषात् ।
अनुक्रमण्या यावत्स्यादह्ना रात्र्या च संचितम् ॥ २००
भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥ २०१
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
यथैतानि वरिष्ठानि तथा भारतमुच्यते ॥ २०२
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं तत्पितॄंस्तस्योपतिष्ठति ॥ २०३
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ २०४
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते ।
भ्रूणहत्याकृतं चापि पापं जह्यान्न संशयः ॥ २०५　C. 1. 261 B. 1. 1. 209 K. 1. 1. 225

---

(except G4.5 M1; G1 om.) यत्र. — c) D14 G (G1 om.) °रं तत्र. — d) D14 सदैव; G2–5.7 स देवः. G8 परिभूयते; G7 °हिध्यते.

197 a) T1 G6 यं तं यति°. V1 Dn Dr D1.4–6 G6 मुक्ता; D3 युक्ता; T1 मुख्या. K0 यत्तद्युनक्तिपरा (sic) यु°; K4 यत्तन्मुक्तिः परा यु°; K5 सर्वद्वंद्वविनिर्मु°; D14 यन्नमंति नरा मु°; T2 ये ध्यायंति पुरा मुख्याः; G1 यस्मिन्यदितवरा (sic) मु°; G2.4.5 M यं ध्यायंति सदा मु° (M2.4 मुख्या); G8 ये ध्यायंति सदा मु°; G7 यद्ध्यायंति सदा मु°. — b) K0 °योगपराश्च ये; M (except M1) °गपरायणाः. — d) V1 Da Dr पश्यंत्यात्मानमात्मनि; D14 यं पश्यंत्यात्मनि स्थि°.

198 a) K6 Dn Dr D1.8.14 सदा युक्तः; D2.6.7.12 सदोयु°. — b) Dn D5.9 सदा ध°. — c) D6–12 आशृण्वन्; S अधीयन् (G6 कथयन्; M1 as in text). K5 नित्यमध्येयं; Dr1 नियमाध्या°. K6 आत्मवान्निर्ममोधीयन्; D5 °वेन्नित्यम°; D14 श्रूयते नित्य°. — d) K0 पापेन मु°; K4 D7.12 पापाद्विमु°.

199 a) K (except K1.5) V1 D (except Da D3.5; D13 missing) °णिकाध्या°; S °क्रामिण° (G1 °क्रामणि°; G2.7 M3 °क्रामण°; G3 °क्रमण°). — b) K3.6 D14 G2 M3 °स्येव°; B2 °स्येय°; T G5.6 M4 °स्यैव°. K2 °स्य समाहितः; G1 °स्येममाद°; G7 °स्य महादि°; M1 °स्येतदादिकं. — c) K4 V1 Dn2 Dr2.r4 आस्तीकः; D6–12 °स्तिक्यः. D2 °तं यावत्; M1 °तं श्रुत्वा.

200 a) G6 सभामध्ये. K1 V1 B D (D13 missing) जपन्कृत्स्नं (B4 D1 पठन्कृत्स्नं; Dn D14 as in text; D5 corr. to जपेत्कृत्स्नं); K6 किं च जपन् (m जपंश्चैव); S जपन्कश्चित् (G6.7 जपेत्कश्चित्; M1.2 as in text). — b) K1 नरो मु°. M1 मुंचति. K2 पातकान्; K8 कल्मषात्. — c) K4 °क्रमणिकाध्यायः; D5 °णिकादध्येत्; T1 अपक्रमणमध्यायं; T2 G1 M1.4 °क्रामिणमध्यायं; G2.3 °मणमध्यायं; G4.5 °क्रामिण्यां च (sic) तत्र स्या°; G6 °मिण्यां तत्र स्या°; G7 °मिणमध्यायं; M3 °क्रामणमध्यायं. — d) K4 दहेत्पापं च; D10 अह्ना राज्यां च; D14 अहोरात्राच्च; G1 अहोराभ्या च; G2 अहोरात्रिषु; G3 अहोराज्यश्च; G6 दिवा राज्यां च; G7 अहोरात्रे च. K5 चिंतितं; Dr1 D6 संभि°; D1 संम°; T G1 M4 संचितात्.

201 a) K4 °तस्येव गुह्यं तत्; G3.7 °तस्यैव पुण्येन. ❀ Arj.: भारतस्येव युज्येतेत्यपपाठः । ❀ — b) K0 B1m.2 Da Dr1 D1.3 (by corr.).11 T1 G (except G1.6) चानृत°; K5 D5 वामृत°. — K2.3 ins. after $201^{ab}$:

67* दिव्या यज्ञाश्च निखिला विष्णुश्चोपनिषन्महत् ।

— c) K2.3 दध्ना. — K6 Dn Dr D2.14 S (except M1) ins. after 201: D4 (marg.) 9–11, after $202^{ab}$:

68* आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ।

[ G सामवेदश्च (G6 आरणं चापि); D9–11 as in G6. D9–11 T G6 °भ्यो यथामृतं. ]

202 G3.7 M om. $202^{ab}$. — b) K0 B Da D12 °रिष्टश्च°. — After $202^{ab}$, D4 (marg.) 9–11 ins. 68* (cf. v. l. 201). — M1.4 om. $202^{cd}$. — c) K1.5.6 T2 G1.6.7 विशिष्टानि (for वरि°). V1 B D यथैतानी (D6–9.12 तथैतदि-; D10 तथैवमि-; D11 तथैवदि-; D14 तदेतमि) तिहासानां; M2.3 नवनीतवरिष्टं हि. — d) D6–12.14 M2.3 महाभा°.

203 G7 (hapl.) om. 203–206; M1 om. $203^{ab}$. — a) K3.4 °श्चैतच्छ्रा°; D14 G3 °श्चेदं श्रा°. G1 यश्च विश्रापये°; G2–5 यश्च विज्ञापये°. — b) K2 °मग्रतः; K3 °संग°; K4 °मात्र°; K6 °मश्च°; D10 °मंत्रि°. G3 °णान्वा सम°. Dr D11 ब्राह्मणस्य समीपतः; D1 °णा भोजयेत्ततः. — c) V1 G4.5 M °मक्षं. K Da T1 M1 च (K2 as in text; K5 तान्); B (except B1) D (except Dr1.r3.r4; D13 missing; D14 च) वै (for तत्). — d) K5 B4 पितृभ्यश्च; D14 °श्चैत्र; G3 पित्र्यं तस्य. K5 उपतिष्ठितं; K6 B D (except D14; D13 missing) M2.4 उपतिष्ठते.

204 G7 om. 204 (cf. v. l. 203). — b) G6 वेदार्थैमुप°. — d) K0 प्रचरिष्यति; K2.6 V1 B Da Dn Dr D1–7.12 °हरि°; K3 चालयि°; K4 D8 M (except M3) °चलि°.

205 G7 om. 205 (cf. v. l. 203). D13 begins with $205^{cd}$. — a) K4 D6.8 G2.5 कार्त्स्न्यं; K5 कर्म-; Dr

C. 1. 282
B. 1. 1. 259
K. 1. 1. 295

य इमं शुचिरध्यायं पठेत्पर्वणि पर्वणि ।
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ॥ २०६
यश्चेमं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ।
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः ॥ २०७
चत्वार एकतो वेदा भारतं चैकमेकतः ।
समागतैः सुरर्षिभिस्तुलामारोपितं पुरा ।
महत्त्वे च गुरुत्वे च ध्रियमाणं ततोऽधिकम् ॥ २०८
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ २०९
तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्क-
स्तान्येव भावोपहतानि कल्कः ॥ २१०

इति श्रीमहाभारते आदिपर्वणि अनुक्रमणी नाम प्रथमोऽध्यायः ॥ १ ॥ समाप्तमनुक्रमणीपर्व

(except Dr1) D1.5 G1.4 °त्पर्यं; D7.9.12 °त्स्नं; D10.11 °मं; T2 G3.6 कृत्स्नं. D10–12 T2 G3 °मिदं (for °मिमं). Ko.2.4.5 श्रुत्वा; D14 विद्यात्. — $^{b}$) M4 ज्ञापयित्वा°. K5 °त्वा समश्नुत; D14 °त्वा सम°. — $^{cd}$) T2 °त्यानृतं. G5 पापं (for चापि). K6 दह्यादसंशयं; G6 दह्यान्न सं°. Ko.2–4 °कृतं जह्यात्पापं चापि न; K1.5 °कृतं पापं जह्याच्चापि न; G3 °कृतं पापं पापी जह्यान्न. B D °हत्यादिकं (Da D3.4.14 as in text) चापि पापं जह्यादसंशयं (D13 °कृतं पापं दह्यामि तदसंशयं).

206 G7 om. 206 (cf. v. l. 203). Ko om. from यं पठेत् in $206^{ab}$ up to शृणु in $207^{a}$. — $^{a}$) Ko.2 इमं यः. D7 T2 G2 इदं (for इमं). T2 शुचिम°; G1–5 संग्रहा°.

207 $^{a}$) Ko om. up to णु (cf. v. l. 206). K1.5 D14 T G6 M यश्चेदं; K2–4 V1 D (except Dr; for D14 see above) G3 °श्चैनं; K6 य इमं. — $^{b}$) M1.3 श्रद्धाभक्तिस°. — $^{c}$) G (except G6) दीर्घमायुश्च कीं°. — $^{d}$) B1 D2–4.6–12 सुगतिं (B1m सद्गतिं, स्वर्गतिं); Da Dr D13 सद्ग°. K4.5 D1 T G (except G6) M °तिं प्राप्नु° (M1 स्वर्गं संप्राप्नु°). — After 207, D14 reads $209^{cd}$.

208 M1 om. 208. — $^{a}$) K6 V1 B D एकतश्चतुरो वेदा. — $^{b}$) K1 B D (except D14) चैतदेकतः (B2 च तथै°); K6 चैव एक°. V1 एकतश्चापि भारतं. — $^{c}$) K (except K4.5) D14 सुरर्षिभिः समागम्य (K1 °मायातैः). M2.3 °तैर्महर्षिभिः. V1 B D पुरा किल सुरैः सर्वैः. — $^{d}$) B D (except D14) समस्य (Dn D1.3–5.9–11 समेत्य) तुलया धृतं; V1 as in Dn. — V1 B D (except D14) ins. after $208^{cd}$: K (Ko.2.3.5.6 om. line 1), after $209^{ab}$:

69* चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ।
तदा प्रभृति लोकेऽस्मिन्महाभारतमुच्यते ।

[ (L. 1) D5 भारतं (for वेदे°). D (except Dn D1.2.5.9; D14 om.) °भ्योऽभ्यधि°. — (L. 2) Ko.1.4 B3 D2 ततः प्र°. ]

— After 69*, V1 reads $209^{cd}$. — B D (except Dn D14) M4 om. $208^{ef}$. — $^{e}$) V1 D14 न (for च) both times. G3.7 भर° (for गुरु°). — $^{f}$) Ko.2.3 ध्रियमाणे; K5 D14 प्रिय°; T2 ध्रिय°; G2 ह्रीय°; G5 त्रिय°. K (except Ko.4) V1 Dn D14 T G4.6 यतोऽधि°.

209 D7.11.12 om. 209. — B3 D10.13 om. $209^{ab}$; B4 ins. it in marg.; Da1 also om. $209^{ab}$, but the line does occur in the comm., where it has probably been erroneously placed by the copyist. — $^{a}$) Ko.6 B (B3 om.) Da1 (in comm.).a2 Dr1 D3–6.14 G2.3.7 °द्भारतत्वाच्च; this reading has been adopted in editions of Kumārila's Tantravārttika (1. 3. 9); cf. Bühler, *Ind. Stud.* 2. 9 f. — $^{b}$) Ko.2.3 °रतमित्युत. — After $209^{ab}$, K1.4 ins. 69* (cf. v. l. 208); Ko.2.3.5.6, only the second of those lines. — G5 om. $209^{cd}$. V1 reads $209^{cd}$ after 69* (cf. v. l. 208); D14, after 207. — $^{d}$) D5 (by corr.) स च पापैः; M1 न स पा°. — After $209^{cd}$, V1 reads $208^{ef}$.

210 $^{b}$) K4 साधारणो वेद°. — $^{c}$) K1 कल्काहरणं; K5 °रणे; D3 G3.7 °भरणं; T2 G2 (भरणं *int. lin.*).4 (before corr.).5 चित्ता°; G1 चित्ताभरणं. — $^{d}$) G7 तस्यैव भा°. V1 °पहितानि.

Colophon of M not collated. B1–3 G1 om. श्री; D6.8.14 read श्रीमन्. — After °भारते, N (except K2.4.5 Dn1.n2 Dr1.r3.r4 D1.2.4.5.7.9.11.12) T G4–6 ins. शतसाहस्र्यां (T1 महापुराणे शतसहस्रिकायां) संहितायां; K6 V1 B Da Dn3 Dr2 D6.10.13 T cont. वैयासिक्यां. — K3 श्री आदि°; D6.8 श्रीमदादि°. — After °पर्वणि, Dr D14 T2 G1.6 ins. पौलोमे; G4 पौष्ये. — For अनुक्रमणी नाम प्रथमोऽध्यायः, K (except K1) V1 D (Dn2.n3 om.) °क्रमणिकाध्यायः (D4.6.10.11 °णिका नाम etc.); G पदार्थानुक्रमणं (G3 °नुग्रहणं; G6 °नुक्रमो) नाम etc. — After °ध्यायः, K1.2 B1.2 Dn (except Dn1) Dr1.r2 D1.5 have the figure 1 (as in text), for which K3 Dr3.r4 D3 subst. प्रथमः; D14 has both. — Ko cont. समाप्तः । समाप्तानुक्रमणी । कृष्णद्वैपायनप्रोक्तशतपर्वणां अंका दसास्त्रिष्ठन्ति. — After the colophon G2.3 ins. a passage given in App. I (No. 3).

ऋषय ऊचुः ।
समन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत्सर्वं यथान्यायं श्रोतुमिच्छामहे वयम् ॥ १
सूत उवाच ।
शुश्रूषा यदि वो विप्रा ब्रुवतश्च कथाः शुभाः ।
समन्तपञ्चकाख्यं च श्रोतुमर्हथ सत्तमाः ॥ २
त्रेताद्वापरयोः संधौ रामः शस्त्रभृतां वरः ।
असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ ३
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ४
स तेषु रुधिराम्भस्सु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन्संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५
अथर्चीकादयोऽभ्येत्य पितरो ब्राह्मणर्षभम् ।
तं क्षमस्वेति सिषिधुस्ततः स विरराम ह ॥ ६

C. 1.
B. 1. 2. 10
K. 1. 2. 10

1 $K_5$ $D_6$ ऋषिरुवाच. — $D_3$ om. 1 and 2. — $^a$) $K_{0.1.4}$ °कमिदं; $D_2$ °कं नाम. $K_5$ समंतकभद्रमिति. — $^c$) $D_{6.8}$ तत्सर्वं च. $K_1$ T यथान्यारयं; $V_1$ Dn $D_{1.2.4-12}$ $M_8$ °तत्वं; $M_{2.4}$ °र्थत्वं. $K_6$ त्वत्तः सर्वं यथातथ्यं. — $^d$) $B_{1.2}$ Da $Dr_3$ $D_{13}$ °च्छाम तत्वतः; $B_{3.4}$ $Dr_{1.r3.r4}$ $D_{7.12}$ °मि तत्वतः; $D_4$ °मि तद्वद.

2 N (except $K_{1.2.5}$ $D_2$) सौतिरुवाच; S सूतः. — $D_3$ om. 2 (cf. v. l. 1). — $^a$) $K_1$ शुश्रूषध्वमथो; $K_{2.3}$ °षध्वं वचो; $K_4$ Dr $D_4$ शृणुध्वं मम वो; $K_5$ °षो मामवो; $K_6$ $V_1$ Dn $D_{1.5.6.8-11}$ शृणुध्वं मम भो; B Da $D_{13}$ °षा मम वो; $D_2$ शृणुध्वं मम वै; $D_{7.12}$ °षाम वचो. Cd शुश्रूषा (as in text). — $^b$) $K_{1-3}$ $M_8$ Cd ब्रुवतो मे; $Da_1$ $D_6$ °वंतश्च; $M_{2.4}$ °वंतो मे. $K_1$ T $G_6$ transp. कथाः and शुभाः. $K_4$ कथां शुभां. $D_2$ ब्रुवतः सत्कथां शुभां; $G_{3.8.7}$ प्रवक्ष्ये निखिलाः कथाः. — $^c$) $K_1$ °काख्या च; $K_4$ $G_{1.7}$ M °ख्यां च ($M_1$ °ख्याश्च); $V_1$ $D_{2.14}$ $G_{2.3.6}$ °ख्यानं.

3 $^b$) $V_1$ $D_{14}$ S प्रहरतां वरः. — $^c$) $G_{2.3.7}$ °र्थिवान्सर्वान्. — $^d$) $V_1$ °मर्षितस्तदा. $K_{0.2.4}$ $D_{2.14}$ °नोदितः. $K_1$ जघान मदचोदितं; $K_6$ जिगायामर्षदंशितः.

4 $^a$) $K_1$ Da $D_{3.13.14}$ $G_{1-3.7}$ सर्वे. $K_6$ $G_3$ °मुत्सार्य; $B_2$ $G_2$ °च्छाद्य; $D_{8.10.11}$ $G_4$ °त्पाद्य. — $^b$) $K_{0.2.4}$ °णातुल°; $K_1$ $G_{1.4.5}$ °णामित°. — $^c$) $K_{4.6}$ $D_{1.2.6.7}$ $T_1$ $G_{2.3}$ स्यमंत°. — $^d$) $K_6$ $V_1$ B Da Dn Dr $D_{5-7.9.12.13}$ रौधिरान्; $D_{1-3}$ रुधिरान्; $D_{14}$ च महा°. — $T_2$ ins. after 4:

70* योजयानामविस्तीर्णाञ्जामदग्न्यः प्रतापवान् ।

5 $^a$) $T_1$ स तेन; $G_1$ सर्वेषु. — $^c$) $K_6$ स्वपितॄंस्तर्प°. — $^d$) $K_0$ °रेणैव नः.

6 $^a$) $K_3$ $D_1$ $M_{2.4}$ अथार्ची°. $G_2$ अथोदका°; $G_{4.5}$ अथ भृग्वा°. — $^b$) $K_{1-4.6}$ D (except $D_{3.4}$) राममब्रुवन्; $K_5$ $V_1$ $G_{2.3.7}$ °र्षभाः (for ब्राह्म°). — K (except $K_5$) D ($D_{14}$ om. lines 3–8) ins. after $6^{ab}$:

71* राम राम महाभाग प्रीताः स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो ।
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ।
राम उवाच ।
यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया । [5]
अतश्च पापान्मुच्येहमेष मे प्रार्थितो वरः ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ।
एवं भविष्यतीत्याहुः पितरो ब्राह्मणर्षभाः ।

[ (L. 1) Da $D_{4.13}$ महाबाहो (for °भाग). — (L. 2) $K_1$ Dn $D_{1.3-5}$ तत्र (for च ते). $K_{1.2}$ Dn $Dr_3$ $D_{1.12}$ ते प्रभो. $D_{14}$ subst. क्षमस्व ब्राह्मणर्षभ for the latter half of line 2; and om. lines 3–8. — (L. 3) D (except Da) यमि($Dr$ °दि)च्छसि. — (L. 5) Da $D_{13}$ यत्र रो°. $K_2$ $D_{3.4}$ °भितप्तेन. — (L. 6) $K_{2.3}$ °न्मुच्येयं. $Dr_1$ $D_{6-12}$ अतः पापाद्विमुच्येहं. — (L. 7) Da $D_{13}$ भवंतु भुवि. — (L. 8) $K_{1-3.6}$ D (except Da $D_{13}$) °ष्यतीत्येवं. $K_{1-3}$ $D_{1.2.5-12}$ पितरस्तमथाब्रुवन्; $K_6$ $D_{3.4}$ पितरो राममब्रुवन्; Dr प्रोचुस्ते ब्राह्मणर्षभं. ]

— $^c$) $K_{0.2.4.6}$ $B_1$m $Da_1$ Dr $T_1$ निषिधुः; $K_3$ $D_{1.3-14}$ G M सिषिचुः ($G_1$ corr. to निषिधुः; $G_5$ जगदुः); $B_2$ षिषिधुः (m सि); $T_2$ as in $G_6$; $Da_2$ (correct acc. to Arj.) Dn निषिषिधुः; Arjp Nilp सिषिधुः (as in text). Cd mentions as alternative readings निषिषिधुः, षिषिचुः and सिषिचुः. — $^d$) $K_2$ च (for ह). $D_5$ has in text त्वं क्षमस्वेति निषिधुस्तं व; ins. marg. पितरो and धादपि (which makes त्वं क्षमस्वेति पितरो निषिधुस्तं वधादपि).

C. 1. 280
B. 1. 2. 11
K. 1. 2. 11

तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति पुण्यं तत्परिकीर्तितम् ॥ ७
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ ८
अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ ९
तस्मिन्परमधर्मिष्ठे देशे भूदोषवर्जिते ।
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १०
एवं नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ।
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्तितः ॥ ११
तदेतत्कथितं सर्वं मया वो मुनिसत्तमाः ।
यथा देशः स विख्यातस्त्रिषु लोकेषु विश्रुतः ॥ १२

ऋषय ऊचुः ।

अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन ।
एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १३
अक्षौहिण्याः परीमाणं रथाश्वनरदन्तिनाम् ।
यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १४

सूत उवाच ।

एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १५
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ १६
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ १७
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ १८

---

7 $^{a}$) $G_{2.3.7}$ तत्समीपे तु यो. — $^{c}$) $K_{0}$ $D_{1.6-8.12}$ $T_{1}$ $G_{2.3}$ स्यमंत°. — $^{d}$) $D_{14}$ S (except $G_{4.5}$) तत्पुण्यं. $K_{1}$ परिमीयते; $K_{3.4}$ $D_{2.14}$ $T_{2}$ $G_{1.4-6}$ $M_{1}$ °कीर्त्यते; $M_{2-4}$ °चक्षते. $K_{0.2}$ पुण्यमेतत्प्रकीर्तितं.

8 $^{a}$) $K_{1}$ योगेन (for यो देशः). — $^{b}$) K (except $K_{4.5}$) $D_{2}$ समभिल°; $G_{2.3}$ स परिदृश्यते; $G_{7}$ समुपदृश्यते. — $^{c}$) $K_{5}$ देशं तेनैव नाम्ना तं. — $^{d}$) $D_{14}$ °र्हुर्महर्षयः.

9 $^{c}$) $K_{6}$ $D_{1.6-8.12}$ $T_{1}$ $G_{2}$ स्यमंत°.

10 $^{a}$) $B_{4}$ यस्मि°; $M_{1}$ अस्मि°. — $^{b}$) $K_{5}$ Dr $D_{3.6-8.11}$ $G_{1.6}$ भूद्दोष°; $G_{2.3.7}$ दोषविव°. — $10^{cd} = 234^{cd}$. — $^{d}$) $K_{1}$ $G_{3}$ युयुत्सवः; $V_{1}$ सुदुर्जयाः. — $K_{1.4}$ m. 6 B (except $B_{2}$) D (except $D_{14}$; $D_{2}$ marg.) ins. after 10 (cf. $25^{ab}$):

72* समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः ।

[ $D_{5}$ सपद्येता द्वि°. $D_{2.6-12}$ समेताः पार्थिवक्षत्रैः. ]

11 $^{a}$) $K_{6}$ Dn $D_{1.3-12}$ $M_{2.3}$ एतन्नामा°. $K_{3}$ °भिसंवृत्तं; $K_{4}$ °निर्वृत्तिः. — $^{cd}$) $D_{1}$ °ण्यस्य °णीयस्य. $G_{2.3.7}$ $M_{2-4}$ देशः परिकी°; $G_{6}$ $M_{1}$ देशः संप्रकी°. $K_{1}$ पुण्यश्चैव समासेन देशो वः समकी°.

12 $^{a}$) $K_{6}$ एतत्तु कथि°. — $^{b}$) $K_{3}$ वै (for वो). $K_{3}$ $V_{1}$ $T_{2}$ $G_{3.6.7}$ M (except $M_{1}$) वो द्विज°; Da Dn $Dr_{1}$.r2.r4 $D_{1-8.13}$ ब्राह्मण°; $D_{14}$ $G_{2}$ वै द्विज° (for वो मुनि°). $Dr_{3}$ $D_{6-12}$ युष्माकं द्विजस°. — $^{c}$) $K_{6}$ $V_{1}$ $D_{14}$ T $G_{1.4.5}$ समाख्या°; $B_{4}$ स वै ख्या°; $D_{1}$ सुवि°. — $^{d}$) $K_{0.2.3}$ B D (except $Dr_{4}$ $D_{2.10.14}$) °केषु सुव्रताः.

13 $G_{2.3}$ मुनयः (for ऋ° ऊ°). — $^{ab}$) $B_{4}$ प्रोक्ता यास्त्वया (m as in text). — $^{c}$) $B_{4}$ $Da_{2}$ $D_{6-14}$ $T_{1}$ °च्छाम्यहं. — $^{d}$) $K_{3}$ सर्वमेतद्; S (except $G_{6}$ $M_{4}$) °त्वं एव. $K_{0.2}$ यथातथा; Dr °श्रुतं; $D_{2}$ °यथं.

14 $^{b}$) K $V_{1}$ $B_{4}$ Dn $D_{1.2.5}$ नराश्वरथ°; $T_{1}$ $G_{2.3}$ तथाश्वनरहस्तिनां; $T_{2}$ $G_{1.4-7}$ °हस्तिनां. — $^{d}$) $K_{6}$ च (for हि). $G_{6}$ तत्सर्वं विदितं त्वया.

15 $K_{3.4.6}$ $V_{1}$ B D (except $D_{2}$) सौतिरुवाच; $K_{1}$ S सूतः ($G_{2.3}$ श्री°). — $^{a}$) $K_{3}$ $Dr_{1}$.r4 $D_{3}$ एको गजो रथ°. $K_{2}$ तु (for च). $V_{1}$ एव (for एको). — $^{c}$) $K_{2}$ $D_{3.4.6-12}$ तु (for च). $K_{0}$ $G_{2.3}$ °गाश्चैव.

16 $^{a}$) $K_{3}$ Da $D_{13}$ पत्तिस्तु. $D_{2}$ च (for तु). $T_{2}$ $G_{4-6}$ M (except $M_{1}$) पत्तिं त्रिगुणितां. K एकं; $D_{2}$ $M_{1.2}$ °कां; $G_{4.6}$ °नां (for एताम्). — $^{b}$) $K_{1}$ $D_{14}$ S विदुः (for आहुः). — $^{d}$) $B_{4}$ $V_{1}$ $G_{1}$ °भिसंज्ञितः.

17 $^{b}$) $K_{2}$ च (for तु). Dr (except $Dr_{1}$) $D_{6}$ (m as in text) $D_{8}$ °नीस्तुरगा°; $G_{4-6}$ °नी तु गणत्रयं. — $G_{2}$ ins. after, $G_{3}$ subst. for, $17^{ab}$: एका तु वाहिनी प्रोक्ता गुल्मानां च त्रयं स्मृतं. — $^{c}$) K $D_{2}$ $G_{6}$ $M_{1}$ °स्त्रोथ वा°.

18 $^{a}$) $K_{3}$ $D_{14}$ च (for तु). — $^{b}$) $K_{3}$ $T_{1}$ चमूस्तिस्र°; $K_{6}$ $T_{2}$ $G_{4.5}$ $M_{1}$ चम्वस्तिस्र°; $G_{2.6.7}$ ताश्च तिस्र°. $K_{5}$ तिस्रस्तास्तु ध्वनी°. — $^{d}$) K (except $K_{6}$) $Da_{2}$ $D_{2}$ T $G_{5.6}$ आहु°.

C. 1. 1818 B. 1. 45. 6 K. 1. 45. 6

दुर्बलं खादितैर्मूलैराखुना बिलवासिना ॥ ६
वीरणस्तम्बके मूलं यदप्येकमिह स्थितम् ।
तदप्ययं शनैराखुरादत्ते दशनैः शितैः ॥ ७
छेत्स्यतेऽल्पावशिष्टत्वादेतदप्यचिरादिव ।
ततः स्थ पतितारोऽत्र गर्ते अस्मिन्नधोमुखाः ॥ ८
ततो मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान् ।
कृच्छ्रामापदमापन्नान्प्रियं किं करवाणि वः ॥ ९
तपसोऽस्य चतुर्थेन तृतीयेनापि वा पुनः ।
अर्धेन वापि निस्तर्तुमापदं ब्रूत माचिरम् ॥ १०
अथवापि समग्रेण तरन्तु तपसा मम ।
भवन्तः सर्व एवास्मात्काममेवं विधीयताम् ॥ ११

पितर ऊचुः ।
वृद्धो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छति ।
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् ॥ १२
अस्ति नस्तात तपसः फलं प्रवदतां वर ।
संतानप्रक्षयाद्ब्रह्मन्पतामो निरयेऽशुचौ ॥ १३
लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै ।
येन त्वां नाभिजानीमो लोके विख्यातपौरुषम् ॥ १४
वृद्धो भवान्महाभागो यो नः शोच्यान्सुदुःखितान् ।
शोचस्युपेत्य कारुण्याच्छृणु ये वै वयं द्विज ॥ १५
यायावरा नाम वयमृषयः संशितव्रताः ।
लोकात्पुण्यादिह भ्रष्टाः संतानप्रक्षयाद्विभो ॥ १६

दुर्बला:; G1.2 M (except M1.5) °लं. Da D2 T G3-6 M1.2 खादितं; G1.2 M2-4 °ते. Da D2 S मूले (M1.5 °लं). — G2.4.5 om. $6^{d}$, $7^{a}$. — $^{d}$) T1 G1 ह्याखु°; M (except M1.5) त्वाखु°.

7 G2.4.5 om. $7^{a}$ (cf. v. l. 6). — $^{a}$) Ś1 D3.5 °स्तंभ° (cf. v. l. 6). — $^{b}$) K (except K1) °कमवस्थि°. — $^{d}$) D3.6.7 तुदते. D5 °नैः शनैः.

8 $^{a}$) T2 G छि(G6 छे)द्यते; M1.5 भेत्स्य°. — $^{c}$) K (except K1) ततश्च; Ñ V1 B1.3 (both m as in text).4.5 D T1 M (except M1) °तस्तु; T2 G1.3.6 तत्रस्था:; G2.4.5 तत्र ते. B4 G (except G3) °ता रौद्रे; D5 °ता गर्ते. — $^{d}$) D5 रौद्रे (for गर्ते). Ś1 K1 Ñ3 T G2.4.5 ह्यस्मिन्न°; K0.2-4 सर्वेप्य°; Ñ1.2 V1 B D व्यत्क्रम°; G1.6 M ह्यस्मि°; G3 तस्मि° (for अस्मिन्न°).

9 Before 9, B2.5 ins. जरत्कारुरु°. — $^{a}$) Ñ V1 B D तस्य (B5 अस्य; B5m D3.4.6.7 अत्र; Da2 तत्र); T G3.6 तस्मात्; G1.2.4.5 M2-4 तेन. Ś1 °मापन्नं (cf. $^{c}$). M1.5 तत्तु दुःखं समु°. — $^{c}$) Ś1 T G3 °पन्नाः (Ś1 *sup. lin.* T2 G3 °न्नः); G1 °मारूढान्.

10 $^{a}$) G1 M2.3 अद्य (for अस्य). — $^{b}$) Ñ1.2 V1 B D (except D5) °नाथवा; T G6 M °न च वा. G3 मदीयेन तथा पुनः. — $^{c}$) K2-4 चापि; M1.5 वाथ. Ś1 K1 तां तर्तुं; T G3.6 M1 संत°. — $^{d}$) M (except M1.5) °पदः.

11 $^{a}$) D1 वे; G3 सु; G6 M1.5 तु (for अपि). — $^{c}$) Ś1 K1 G6 एक(G6 °त)स्मात्; Ñ1.3 V1 B D °वेह; T1 G3 M1.3.5 °व स.

12 Ś1 K1 D6 S om. ऊचुः. — $^{a}$) Ś1 Ñ V1 Dn D1.4 G3 वृद्धो; D3 T2 G1.2.4-6 कुतो; D5 सिद्धो (cf. v. l. $15^{a}$). — $^{b}$) K2-4 Ñ V1 D (except Da2 D3-6) T1 G1-3 M (except M1.5) °च्छसि. — $^{c}$) G3 तु सर्वेण. — $^{d}$) Ñ V1 B4 Dn D3.5 °कयते तद्. K0.2 D5 वि(D5 अ)पोहि°.

13 $^{a}$) Ñ3 T G3.6 M1.5 transp. तात and तप°. D6 अस्ति चान्यत्तु त°. — $^{c}$) = 1. 13. $14^{c}$. Ś1 K Ñ3 T M1.5 °प्र(T2 °प्रे)क्षयात्त्व(T °द)स्मिन्; G1-3 °प्र(G3 °प्रे)क्षया ब्र°. — $^{d}$) Ñ V1 Da1 Dn S पताम (G3 वसतं). B4 °येषु वै (m as in text); M (except M1.5) °ये वयं. — After 13, Dn ins.:

412* संतानं हि परो धर्म एवमाह पितामहः ।

14 $^{a}$) B1 नस्तत्र (m as in text). M (except M1.5) इह मे (M3 नो) लंबमानानां. — $^{b}$) D6 रक्षा न (for न ज्ञानं). — $^{c}$) K (except K1) D2 तेन. Ś1 K1 D1 त्वा. S (except T1 M1.5) om. न.

15 $^{a}$) Ś1 K1.4 Ñ V1 Dn D1-3 T G1.2.4.5 वृद्धः; D6.7 रुद्रः; G3 ऋषिः (cf. v. l. $12^{a}$). B D (except Dn D1) महातेजा; T G °योगी; M ब्रह्मचारी. — $^{b}$) G1.2.4.5 शोचसि दुःखि°; G3 °च्यांश्च दुः°; M (except M1.5) त्रातुमिहेच्छति (cf. $12^{b}$). — After $15^{ab}$, G (except G3.6) M (except M1.5) ins.:

413* शोच्यान्सुदुःखितानस्मान्कस्माद्वेदविदां वर ।

[ First half of this line = $15^{b}$; but cf. v. l. 15. ]

— $^{c}$) K3 Da शोचस्युपे°; Ñ2 V1 B Dn D1-4.6.7 °चते चैव. — $^{d}$) D6 ये संति च द्वि°. T G transp. ये and वै. M1.3.5 च (for वै).

16 $^{ab}$) = 1. 13. $14^{ab}$. Ś1 Ñ3 संश्रित°; K (except K1) Dn1 D1.4.6 T1 शंसित° (cf. v. l. 1. 1. 2; 13. 10 etc.). — $^{c}$) Ś1 (*sup. lin.* as in text) K1.3 G (except G3.6) स्रस्ताः; K0.2.4 प्राप्ताः (for भ्रष्टाः). — $^{d}$) Ś1 °त्प्रभो; Ñ1.2 V1 B D °न्मुने; Ñ3 T G2-6 °न्विताः; G1 M

प्रनष्टं नस्तपः पुण्यं न हि नस्तन्तुरस्ति वै ।
अस्ति त्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा १७
मन्दभाग्योऽल्पभाग्यानां बन्धुः स किल नः कुले ।
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ।
नियतात्मा महात्मा च सुव्रतः सुमहातपाः ॥ १८
तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम् ।
न तस्य भार्या पुत्रो वा बान्धवो वास्ति कश्चन ॥१९
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् ।
स वक्तव्यस्त्वया दृष्ट्वा अस्माकं नाथवत्तया ॥ २०
पितरस्तेऽवलम्बन्ते गर्ते दीना अधोमुखाः ।
साधु दारान्कुरुष्वेति प्रजायस्वेति चाभिभो ।
कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन ॥ २१

यत्तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान् ।
एषोऽस्माकं कुलस्तम्ब आसीत्स्वकुलवर्धनः ॥ २२
यानि पश्यसि वै ब्रह्मन्मूलानीहास्य वीरुधः ।
एते नस्तन्तवस्तात कालेन परिभक्षिताः ॥ २३
यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम् ।
तत्र लम्बामहे सर्वे सोऽप्येकस्तप आस्थितः ॥ २४
यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः ।
स तं तपोरतं मन्दं शनैः क्षपयते तुदन् ।
जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् ॥ २५
न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम ।
छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः ।
नरकप्रतिष्ठान्पश्यास्मान्यथा दुष्कृतिनस्तथा ॥ २६

C. 1. 1940
B. 1. 45. 29
K. 1. 45. 29

°द्विति (M1.5 °द्विज).

17 a) G2.4.5 नु (for नस्). Ñ1.2 V1 B D तीव्रं (for पुण्यं). G1 प्रनष्टस्तपसः पु°. — c) B3 वैको; B1 D4 ह्येको. — d) M1.5 स हि (for सोऽपि).

18 a) = 1. 13. 15c. M1.5 मंदभाग्य; M2-4 °भाग्यो. K0 °पुण्यानां; M2-4 °भाग्यानां. — b) Ś1 K1 transp. स and किल. D5 बांधवः कि°. Dn D3.4.6.7 तप एकं समाश्रि (D3.6.7 °श्रि)तः; D1 यश्च एकांतमाश्रितः (cf. 1. 13. 15d). — c) = 1. 13. 10a. — f) Ś1 K1 च; K4 स (for सु-).

19 a) K2 वै; K3 अस्य; B3 M1.3 स्व-; D3 असन् (for स्म). M2.4 ते तस्य. T1 °सो मोहात्. — b) B1.3.5 °दिता महत्; B2.4 D3.6.7 °तं महत्. G3 कृच्छ्रमुत्पादितो वयं. — c) B1 transp. भार्या and पुत्रो. — d) D2 °वो वेति; T1 °वा शपि (sic); T2 °वा चापि; G1.2.4-6 °वो वापि; G3 M1.3.5 °वा अपि; M2.4 °वा वापि. Ñ3 S केचन (G1 कश्चन; G2 as in text).

20 c) G1 transp. स and वक्तव्यः. Ś1 सम्यक्; Ñ1.2 V1 B दृष्टः. — d) Ś1 K1 Ñ3 Da Dn1.n3 D1-4.6.7 T अस्माकं (as in text); G3 M1.5 चास्मा°; the rest ह्यस्मा°.

21 a) K2 D1 T1 °स्तव; D3 M1.5 °स्त्वेव. — b) Ś1 K1 D4 T G3.6 अधोमु° (as in text); G2.4.5 ह्यवाङ्मु°; the rest ह्यधोमु°. — d) K2 वाभिभो; Ñ1.2 V1 B D4 D2-7 वा वि°. K4 Dn D1 प्रजामुत्पादयेति च. Cd प्रजायस्व (as in text). — After 21cd, B1 ins. a passage of 6 lines given in App. I (No. 26). — e) Da G1 कुले. — f) D5 T2 G स एवैकः (G3 तमेकत्वः); M (except M1.5) स चैवैकः. Ñ3 B3.4 Da1 D1-3.5-7 T2 M (except M1.5) °धनः.

22 a) K0 Ñ3 B1 m.2 Da D3 G (except G2) M1.3.5 यं तु; Ñ1.2 V1 Dn D1 यस्त्वं (Dn3 यं त्वं); B1 यच्च. K3 वै; M1.5 मे (for नो). — K2 (hapl.) om. 22b-23a. — b) = 4b. — c) K0.4 Da D5 G2.4.5 एको°. Ś1 °स्तंभ; K1 °स्तस्य; Da1 D6 कुले तंतुः. — d) Ñ1.2 V1 Dn D2 आस्ते. Ś1 K0.1.3 Ñ3 B (except B1) G6 स (for स्व-).

23 K2 om. 23a (cf. v. l. 22). — a) Ñ3 S चैव (G3 चेदं) त्वं (for वै ब्रह्मन्). — Ś1 K1.3 om. (hapl.) 23b-24a. — b) K4 T G3.6 M मू(G3 कु)लानीमानि वी°. — c) K4 B5 Dn1 D1.3.6 T G2 एतेन तं°; G3 °न कृपतस्ता°.

24 Ś1 K1.3 om. 24a (cf. v. l. 23). — a) K0 यत्ते तत्; K4 ये त्वे°; B4 G4-6 M2-4 °त्त्वेकं; D2 नन्वे°; D3.6.7 यच्चै°; T यद्दृ°; G1.2 °त्त्वेकः; G3 M1.5 यद्दे°. — b) D6.7 मूलमस्या हि; G1.5 °मर्धास्य; G6 °मस्य न. — c) K2.4 Ñ2 V1 B1-3.5 D यत्र; B4 T G1.3.6 M अत्र (M1.5 तेन). Ñ1.2 V1 Dn D1 G3 M (except M1.5) गर्ते (for सर्वे). — d) Ś1 K1 M2.4 तपसि स्थितः; K0.2.3 D3 तप आश्रितः; D2 तपसा स्थितः; G3.6 स्तंब आश्रि(G3 °हि)तः.

25 b) K2 D5 T एव (for एष). — c) Ñ V1 B (except B3) Da T G2-5 °रतिं; M1.5 °रतिः. G6 स तंतुमेकं दिवसैः; M2-4 स तं तु वितुदन्नाखुः. — d) B2.3 T G3 M1.5 भक्षयते. D2 ह्यदन्; D5 रज°; D7 रुद्°; G2.4.5 नुदः; M (except M1.5) द्विजः; Cd नुदन्. G3 दशनैः क्षयते तु°. — e) G1.2 तपोवृद्धं. — f) K2 D6 महात्मा°. K1.4 B (except B1) D (except Dn) °चेतनं (cf. v. l. 1. 1. 98d).

26 e) Hypermetric! Only Ñ1.3 M2.3 as in text. K नरकस्थान्प्रपश्यास्मान् (K0 °श्यामि); Ñ2 V1 B D अधःप्रविष्टान्प°; T G M1.5 अप्रतिष्टान्प्रपश्या°; M4 नरकप्रविष्ट°.

C. 1. 1841
B. 1. 45. 29
K. 1. 45. 29

अस्मासु पतितेष्वत्र सह पूर्वैः पितामहैः ।
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ॥ २७
तपो वाप्यथवा यज्ञो यच्चान्यत्पावनं महत्
तत्सर्वं न समं तात संतत्येति सतां मतम् ॥ २८
स तात दृष्ट्वा ब्रूयास्त्वं जरत्कारुं तपस्विनम् ।
यथादृष्टमिदं चास्मै त्वयाख्येयमशेषतः ॥ २९
यथा दारान्प्रकुर्यात्स पुत्रांश्चोत्पादयेद्यथा ।
तथा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ॥ ३०

इति श्रीमहाभारते आदिपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## ४२

सूत उवाच ।
एतच्छ्रुत्वा जरत्कारुर्दुःखशोकपरायणः ।
उवाच स्वान्पितॄन्दुःखाद्बाष्पसंदिग्धया गिरा ॥ १
अहमेव जरत्कारुः किल्बिषी भवतां सुतः ।
तद्दण्डं धारयत मे दुष्कृतेरकृतात्मनः ॥ २
पितर ऊचुः ।
पुत्र दिष्ट्यासि संप्राप्त इमं देशं यदृच्छया ।
किमर्थं च त्वया ब्रह्मन्न कृतो दारसंग्रहः ॥ ३

— d) = 1. 13. $17^{b}$. G6 दुष्कृतकारिणः.

27 a) M1.5 अस्माभिस्तु परीतैस्तु. — b) Ñ2 B2.3.5 Dn D1 G2.4.5 M4 सर्वैः (for पूर्वैः). Ś1 K Ñ3 G6 सहान्वयैः; Ñ1 कुलान्वयः; Ñ2 Dn D1 सबांधवैः (for पिता°). — c) Ñ1 D2 M1 छिन्नका°; T1 छिन्नमू°. — d) T1 G3.6 तथा; T2 यथा.

28 b) Da1 D2–4.6.7 T2 G3 M1.5 यद्वान्यत्. — cd) G6 एतत् (for इति). Ñ1.2 Dn D1 °र्वैमपरं तात न संतत्या समं मतं.

29 a) K0 स तान् (sic); K1 एतत्तु; Ñ3 V1 D2.7 G (except G6) तं तात; D5 तं ततः. D1 तान्दृष्ट्वैव (for तात दृ°). K3 transp. दृष्ट्वा and ब्रूयाः. K1 Ñ V1 B D4.5 तं (for त्वं). Ś1 एतद्दृष्ट्वा तु भूयस्त्वां (m अस्मान्दृष्ट्वा ततो ब्रूयात्). — b) Ñ1.2 V1 B1 Dn D1.4.5 तपोधन; B2–5 Dn D2.3.6.7 T तपोधनं (for तप°). — c) M1.5 अद्य (for यथा). Ñ3 वृत्तं (for दृष्टं). Ś1 K1 दृष्ट्वा वयं. Ñ1.2 V1 B D चात्र (D5 सर्वं); T G चाद्य (G1 as in D5; G5 चास्य).

30 a) G5 प्रगृह्णात्. M (except M1.5) च (for स). — b) M2.3 पुत्रं. Ś1 Ñ1.2 V1 B D (except Da) M5 °श्चानुरूपा°. — c) M (except M1.5) एतत् (for तथा). — d) G4.5 ह्यस्माकं. — After 30, Ñ1.2 V1 B3.4.5 (marg.; om. line 1) Dn D1.2.4 ins.:

414* बान्धवानां हितस्येह यथा चात्मकुलं तथा ।
कस्त्वं बन्धुमिवास्माकमनुशोचसि सत्तम ।
श्रोतुमिच्छाम सर्वेषां को भवानिह तिष्ठति ।

[ (L. 1) Ñ1 V1 B3 अनुकूलं यथा तथा; B4 यथा मे कुशलं तथा. — (L. 2, 3) = (var.) 1. 13. $17^{cd}$, $18^{ab}$. D2 बंधुरिवा°. D2.4 °मिच्छामि. ]

Colophon. *Sub-parvan name:* All MSS. (except Dn3 T2 G3) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* K0 पितृवाक्यं; K3 जरत्कारुपितृसमागमः; Ñ1.2 V1 जरत्कारुपितृदर्शनं; G3 M1.5 पितृजरत्कारुसंवादः. — *Adhy. no.* (figures, words or both): K0 40; K1.4 53; K3 (*sup. lin. sec. m.*) T 38; Ñ1.2 V1 45; B1 44; B2 47; D3.4 (marg.) 43; D5 11; G M 28 (G2.3 30; G6 M3 29). — *S'loka no.:* Dn 33. — *Aggregate s'loka no.:* Dn2 1915.

**42**

1 K0.3.4 Ñ1.2 V1 B1 Dn D1 सौतिरु°; K1 S (T2 with prefixed श्री; G4.5 M2.4 om. the ref.) सूतः. — b) Ñ1.2 V1 Dn D1 S भृशं (for दुःख-); cf. 1. 43. $30^{d}$; 46. 34f. — c) Ñ1.2 V1 B D (for D5 see below) तान् (for स्वान्). D3 सर्वान्; G3 मुख्यान् (for दुःखात्). D5 आह तांश्च पि°. — d) V1 B D (except Dn D1) G6 बाष्पगद्गदया; Cd as in text (cf. 1. 43. 31). — After 1, K2–4 Ñ1.2 V1 B D ins.:

415* जरत्कारुरुवाच ।
मम पूर्वे भवन्तो वै पितरः सपितामहाः ।
तद्ब्रूत यन्मया कार्यं भवतां प्रियकाम्यया ।
[ L. 1 = 1. 13. $19^{ab}$. ]

2 Before 2, Ś1 S (except G3.6 M1.5) ins. जरत्कारुः. — c) Ñ2 Dn ते (for तत्). — d) Ś1 K1 °तेनाकृता°; D3.7 °सेतरकर्मणः; M1.5 पुष्कलं चाकृ°.

3 Ś1 S om. ऊचुः (M5 om. the ref.). — a) K (except K1) तु (for च). — After 3, K0.4 Da1 ins. a passage given in App. I (No. 27).

जरत्कारुरुवाच ।
ममायं पितरो नित्यं हृद्यर्थः परिवर्तते ।
ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै ॥ ४
एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ।
मया निवर्तिता बुद्धिर्ब्रह्मचर्यात्पितामहाः ॥ ५
करिष्ये वः प्रियं कामं निवेक्ष्ये नात्र संशयः ।
सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन ॥ ६
भविष्यति च या काचिद्भैक्षवत्स्वयमुद्यता ।
प्रतिग्रहीता तामस्मि न भरेयं च यामहम् ॥ ७
एवंविधमहं कुर्यां निवेशं प्राप्नुयां यदि ।
अन्यथा न करिष्ये तु सत्यमेतत्पितामहाः ॥ ८

सूत उवाच ।
एवमुक्त्वा तु स पितॄंश्चचार पृथिवीं मुनिः ।
न च स्म लभते भार्यां वृद्धोऽयमिति शौनक ॥ ९
यदा निर्वेदमापन्नः पितृभिश्चोदितस्तथा ।
तदारण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः ॥ १०
यानि भूतानि सन्तीह स्थावराणि चराणि च ।
अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः ॥ ११
उग्रे तपसि वर्तन्तं पितरश्चोदयन्ति माम् ।
निविशस्वेति दुःखार्तास्तेषां प्रियचिकीर्षया ॥ १२
निवेशार्थ्यखिलां भूमिं कन्याभैक्षं चरामि भोः ।
दरिद्रो दुःखशीलश्च पितृभिः संनियोजितः ॥ १३ C. 1. 1861 B. 1. 46. 16 K. 1. 46. 16

4 $\acute{S}_1$ $K_{1.2}$ $D_6$ S (except $G_5$) om. उवाच. — [b]) $G_{3.6}$ हृदि संपरि°. — [d]) $B_2$ $D_{2.5}$ °येहम°; Cd as in text. $B_{1.2.4}$ $D_a$ $D_5$ T $G_{1-5}$ $M_5$ ह; $D_2$ $G_6$ च (for वै). — After 4, $K_4$ $\tilde{N}_{1.2}$ $V_1$ B D ins.:

416* न दारान्वै करिष्येऽहमिति मे भावितं मनः ।

=(var.) 1. 13. $23^{ab}$.

5 [b]) $M_{1.5}$ शोकार्तानिव.

6 [a]) G (except $G_{1.6}$) कार्यं (for कामं). — [b]) $\tilde{N}_{1.2}$ $V_1$ B D °क्ष्येहमसंशयं. — [c]) $\tilde{N}_3$ S सनामां.

7 [a]) $\acute{S}_1$ K हि (for च). M (except $M_{1.5}$) °ति यदा का°. — [b]) Here and below the majority of N MSS. भैक्ष्य-. — [c]) $G_3$ प्रतिगृह्य सनामां च. — [d]) $B_5$ reads न after च. $G_6$ उद्वहेयं; Cd as in text. $K_2$ $D_{2.5}$ S (except $G_1$) तां (for यां). $\acute{S}_1$ $K_1$ नेतरां रोचयाम्यहं.

8 [ab]) $B_4$ $G_{2-4}$ °विधा°. $B_4$ भार्यां; $G_{3.6}$ कन्यां (for कुर्यां). $M_{1.5}$ कुर्यां निवेशं पितर एवं संप्रा°. — [c]) $\acute{S}_1$ K M (except $M_{1.5}$) करिष्यामि; $\tilde{N}$ $V_1$ B D °ष्येहं; $T_2$ $G_6$ °ष्ये तत्. — [d]) $K_1$ न संशयः (for पिता°). T सत्यमेव ब्रवीमि वः. — After 8, $K_{3.4}$ (om. line 1) $\tilde{N}_{1.2}$ $V_1$ B D ins.:

417* तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै ।
शाश्वताश्चाव्ययाश्चैव तिष्ठन्तु पितरो मम ।

[ =(var.) 1. 13. 28. — (L. 2) $K_4$ शाश्वतं चाव्ययं चैव पितरो वै मतं मम. ]

9 $\acute{S}_1$ $K_1$ S ($G_3$ om.) सूतः; $K_{0.3.4}$ $B_1$ $D_1$ सौतिरु°. — [a]) $D_2$ स मुनिः; $G_3$ पृथिवीं. — [b]) $G_3$ °र स महामुनिः. — [c]) $M_{1.5}$ कार्यं (for भार्यां). — [d]) $D_{6.7}$ चानघ (for शौ°).

10 Before 10, $K_0$ (irrelevantly) ins. शौनक उ°. — [b]) $D_2$ °भिर्देशितस्त°; $D_5$ °भिर्नोदितो यथा; T $G_{3.6}$ $M_{1.5}$ °भिश्च प्रचोदितः. — [c]) $B_4$ ततो°; $B_5$ $G_3$ तथा° (for तदा°). $K_0$ स गत्वा वै; $M_1$ प्रविश्योच्चैः; $M_5$ प्रपश्यो°. — After 10, $\tilde{N}_{1.2}$ $V_1$ B D (except $D_a$) ins.:

418* स त्वरण्यगतः प्राज्ञः पितॄणां हितकाम्यया ।
उवाच कन्यां याचामि तिस्रो वाचः शनैरिमाः ।

[ (L. 1) B $D_2$ प्रियका°. — (L. 2) Cf. 1. 13. 30. $\tilde{N}_1$ $V_1$ $B_{1-3.4m}$ $D_{2-7}$ भिक्षां (for कन्यां). ]

11 [a]) $\acute{S}_1$ $K_{1.4}$ transp. भूतानि and सन्तीह. — [b]) $K_0$ $G_{1.2.4-6}$ जंगमस्थावराणि च; $K_{2.3}$ $\tilde{N}_3$ T $G_3$ M जंगमानि स्थिराणि च; $K_4$ स्थिराणि च च°; $D_5$ °णि च सर्वशः. — [c]) $\acute{S}_1$ $K_{0.1.4}$ $D_{2.3.6.7}$ यानीह; $D_{a1}$ यावंति; T $G_{1.3.6}$ $M_{1.5}$ चान्यानि.

12 [b]) $D_5$ °तरो नोद°. $B_4$ वै (for माम्). — [c]) $K_0$ $D_{2.5}$ $G_1$ निवेशस्वे°; $B_3$ निविशं वोन्न; $G_{2.4.5}$ निवेशये($G_2$ °य)ति. Cd appears to have read निवेशं (cf. $B_3$ above). — [d]) $\tilde{N}_2$ $D_n$ $D_1$ संतानस्य चि°.

13 [a]) $K_4$ $\tilde{N}$ $V_1$ $B_3$ D $T_2$ $G_3$ $M_{2-4}$ निवेशाया($D_5$ °र्थो)खि°; $B_{1.5}$ निविशाम्य($B_5$ °प्य)खि°; $T_1$ निवेशिदखि°; $G_1$ निवेशार्थं खि°; $G_2$ निवेशाद्यखि°; $M_{1.5}$ निवेश्यर्थां($M_5$ °स्वा)खि°. — [b]) $D_1$ T $G_{3.6}$ M अहं (for भोः). — [d]) $D_2$ $M_3$ °भिश्च नियो°.

14 [a]) $K_4$ $B_4$ (m as in text) कस्य; $M_{1.5}$ तस्या (sic). — [b]) $D_{5.7}$ $T_1$ या (for ये). $D_1$ मयेह परिकीर्तितं; S (except $T_1$ $G_3$ $M_{1.5}$) गुणैः सम्यक् प्रकीर्तिताः ($M_{2-4}$ °र्त्यतां). — [c]) $D_5$ कन्यां प्रयच्छतु स मे; G (except $G_3$) M (except $M_{1.5}$) प्रयच्छतु स मे कन्यां.

C. 1. 1862
B. 1. 46. 17
K. 1. 46. 17

यस्य कन्यास्ति भूतस्य ये मयेह प्रकीर्तिताः ।
ते मे कन्यां प्रयच्छन्तु चरतः सर्वतो दिशम् ॥ १४
मम कन्या सनाम्नी या भैक्षवच्चोद्यता भवेत् ।
भरेयं चैव यां नाहं तां मे कन्यां प्रयच्छत ॥ १५
ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः ।
तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन् ॥ १६
तेषां श्रुत्वा स नागेन्द्रः कन्यां तां समलंकृताम् ।
प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः ॥ १७
तत्र तां भैक्षवत्कन्यां प्रादात्तस्मै महात्मने ।
नागेन्द्रो वासुकिर्ब्रह्मन्स तां प्रत्यगृह्णत ॥ १८
असनामेति वै मत्वा भरणे चाविचारिते ।
मोक्षभावे स्थितश्चापि द्वन्द्वीभूतः परिग्रहे ॥ १९
ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन ।
वासुके भरणं चास्या न कुर्यामित्युवाच ह ॥ २०

इति श्रीमहाभारते आदिपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## ४३

सूत उवाच ।
वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा ।
सनामा तव कन्येयं स्वसा मे तपसान्विता ॥ १
भरिष्यामि च ते भार्यां प्रतीच्छेमां द्विजोत्तम ।
रक्षणं च करिष्येऽस्याः सर्वशक्त्या तपोधन ॥ २
प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति ।

---

15 [a]) B1 transp. मम and कन्या. Ñ3 S (except G2) सनामा. T1 एव; T2 G3 M3.5 वै (for या). — [b]) Ś1 K2 Ñ1.2 V1 B2 D3.6.7 चोदिता. — [c]) T1 केवलां (for चैव यां). G3 नाहं तां (for यां नाहं). — [d]) G3 एवं (for तां मे). K2 B3 D3.5.7 S (except T2 G3 M1.5) °च्छतु (G6 °श्च).

16 Before 16, K0 ins. सूत उ°; K4 सौतिरु°; S (except G3 M3) सूतः. — [a]) T2 G2.4.5 तु (for ते). D3.6.7 ते; M1.5 च (for वै). — [b]) K1 D5 T1 G3 °त्कारोः; K2 °त्कारु-. M2.3 (*inf. lin.*).4 सुयोजिताः. — [c]) Ś1 D3.6.7 वै (for ते). — [d]) G3 वासुकिं. Ś1 संन्यवे°; K1 पर्यवे°.

17 [a]) G6 अथ (for स). — [b]) K3 Ñ1.2 V1 D (except D2.5) M transp. कन्यां and तां. G3 कन्यकां सम°.

18 [a]) B1 ततस्तां; Dn3 तत्रैतां; T G1.3.6 M1.5 स तत्र. — [c]) T1 G3.6 M1 कालेन (for नागेंद्रो). — [d]) Ś1 न च तां; K0.2.3 Ñ3 न च स. D2 न स प्रत्यग्रहीच्च तां.

19 [ab]) Ś1 K1 B1.5 M °नाम्नीति. D5 G3 M तां (for वै). T2 G1.2.4.5 °ति कृत्वा वै. Ś1 K1 च वि°; D5-7 चावि°. K4 सनामा तु भवेद्या मे न भरेयं तु यामहं. — [c]) G (except G3.6) मोक्ष एव; M1.5 भैक्षभा°; Cd as in text. — [d]) K0 T G3 M द्वैधीभू°; Ñ2 V1 Dn द्वंद्वभू°; D5 G1.4-6 मंद्रीभू°; G2 मंत्रीभू°; Cd as in text. Ś1 K1 प्रतिग्र°.

20 [b]) G2 अपृच्छत्. — After 20[b], K4 Ñ3 ins. 1. 13. 33 (v. l. भुजंगमं for महातपाः). — [c]) Ś1 K1 B3 Da1 D5 T2 G1-5 M वासुके (as in text); T1 G6 °किः; the rest °किं. — [d]) M1.3.5 तं (for ह). — After 20, B3 ins. a passage of six lines consisting of a question by Ruru (2 lines) and answer by Pramati (4 lines), the latter being merely a repetition of 1. 13. 35-6 (see App. I, No. 28).

Colophon. *Sub-parvan:* All MSS. (except Dn2 D7 T2) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* K3 कन्याप्रदानं; Ñ1.2 V1 वासुकिजरत्कारुसमागमः; G3 भार्यान्वेषणं. — *Adhy. no.* (figures, words or both): Ś1 K1 54; K3 (*sup. lin. sec. m.*) T1 39; B1 45; B2 D3.4 (marg.) 44; D5 12; T2 G M 29 (G3.8 31; G6 M3 30). — *S'loka no.:* Ñ3 21; Da1 Dn 23. — *Aggregate s'loka no.:* Dn2 1836.

### 43

1 Ś1 K1 S (G4-6 om. the ref.) सूतः; K0.3.4 (with prefixed श्री) Ñ1.2 V1 B1 Dn D1 सौतिरुवाच. — [b]) G1 इदं (for ऋषिं). D6 प्रति (for तदा). — [c]) The MSS. vary at random between सनामा and °म्नी (cf. v. l. 1. 42. 19). — [d]) M1.5 वै (for मे).

2 [a]) Ñ1.2 ते कन्यां. — Ś1 om. 2[nd]. — [d]) B4 यथाशक्त्या. B3 द्विजोत्तम. — After 2, K3.4 Ñ V1 B D T2 G (except G3) ins.:

जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ॥ ३
तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः ।
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ॥ ४
ततो वासगृहं शुभ्रं पन्नगेन्द्रस्य संमतम् ।
जगाम भार्यामादाय स्तूयमानो महर्षिभिः ॥ ५
शयनं तत्र वै क्लृप्तं स्पर्ध्यास्तरणसंवृतम् ।
तत्र भार्यासहायः स जरत्कारुरुवास ह ॥ ६
स तत्र समयं चक्रे भार्यया सह सत्तमः ।
विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ॥ ७
त्यजेयमप्रिये हि त्वां कृते वासं च ते गृहे ।
एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ८
ततः परमसंविग्ना स्वसा नागपतेस्तु सा ।
अतिदुःखान्विता वाचं तमुवाचैवमस्त्विति ॥ ९
तथैव सा च भर्तारं दुःखशीलमुपाचरत् ।
उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी ॥ १०
ऋतुकाले ततः स्नाता कदाचिद्वासुकेः स्वसा ।
भर्तारं तं यथान्यायमुपतस्थे महामुनिम् ॥ ११
तत्र तस्याः समभवद्गर्भो ज्वलनसंनिभः ।
अतीव तपसा युक्तो वैश्वानरसमद्युतिः ।
शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः ॥ १२
ततः कतिपयाहस्य जरत्कारुर्महातपाः ।
उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् ॥१३
तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमियाद्गिरिम् ।
अह्नः परिक्षये ब्रह्मंस्ततः साचिन्तयत्तदा । C. 1. 1884 B. 1. 47. 15 K. 1. 47. 16

419* त्वदर्थं रक्ष्यते चैषा मया मुनिवरोत्तम ।
ऋषिरुवाच ।
न भरिष्येऽहमेतां वै एष मे समयः कृतः ।
अप्रियं च न कर्तव्यं कृते चैनां त्यजाम्यहम् ।

[ (L. 1) K3 Ñ3 D5 T2 G (except G3) रक्षिता. K4 Ñ3 B Da D2.5 T2 G (except G3) मुनिवर प्रभो. — (L. 2) Dn वै (for मे). T2 G (except G3) अप्रियं मा करिष्येच्च. ]

3 Before 3, K0 Ñ3 (*sup. lin. sec. m.*) B3 D2 ins. सूत उ°; K4 Ñ1.2 V1 B1 Dn D1.4 सौतिरु°; T G M2.4 सूतः (G4.5 सौतिः). — a) B5 D3.6.7 °श्रुते च; D2 °श्रुतेन; M1.3.5 °ज्ञाते तु. — c) K3 ततो (for °दा). — d) The MSS. vary at random between भुजग- and भुजं°.

4 a) K3 तत्र वेदविदां; M1 तदापि द्विविदां; M5 ततो विद्विविदां. — b) K3 तपोनिष्ठो. D4 G1.2.4.5 महातपाः; T1 °बलः; T2 G3.6 M °मतिः. — c) B1 कन्यायाः (m धर्मात्मा as in text).

5 Ñ1 om. $5^{ab}$. — a) G6 °गृहे शुभ्रे. K2 शुद्धं; Ñ2.3 V1 B D रम्यं. — b) S धीमतः (G1 भूभृतः) (for सं°). — c) Ś1 K1 जग्राह भा°. — d) G6 मनीषिभिः.

6 a) Ñ V1 D संक्लृप्तं (D2.5 as in text; D3.7 क्लृप्तं स). — b) K1 सव्यास्तरण°; K2 महा°; D2 स्वच्छा°; D3 स्पृध्या°; T1 G4 स्वाध्या°; G1 सुष्ठ्वा°; G2.5 स्वध्या°; Cd as in text. D5 G3.6 M (except M1.5) परार्ध्यास्तरणावृ(D5 °न्वि)तं. — c) K0 T1 G1–3 सन्; K4 तु; Ñ V1 Dn वै; B Da D1.2.4.5 असौ (for स). G6 स तत्र भार्यासहितो.

7 b) K0.2.4 G1.2.4 M1.5 सत्तम. D2 भार्यामामंत्र्य वै मुनिः; D3.6.7 जरत्कारुस्त्रिया सह. — After $7^{ab}$, D4 G (except G3) M (except M3) ins. जरत्कारुः. — c) G3 अप्रियं. — d) Ś1 K1 G3 कथंचन.

8 a) Ñ1.2 V1 B D विप्रिये च (for अप्रिये हि). — b) K4 T G3 कृतवासः (T2 °सं); M1.5 गृहे वा°. M1.5 के (for ते).

9 Before 9, B3 D1 (marg.) ins. सौतिरु°. — a) D5 परमविग्नासीत्. — b) Ñ1.2 V1 B D T1 °पतेस्तदा (D1 as in text; D6 °पतेः सुता). — c) K4 Ñ1.2 V1 B D G (except G3.6) M3 वाक्यं. — d) G (except G3.6) °वाच मन(G4 तप)स्विनी.

10 b) Da दुःखशीला उपा°; G1 °शीलसमन्विता. — c) Ś1 श्वेतकाकेयैः; K2 यश्च तानीयैः; B4 सकलैस्तस्य (m as in text); G3 श्वेतहारीयैः; M1.5 चेत°; M2 चेक°; Cd as in text.

11 In Ś1, $11^{cd}$ is lost on a torn portion. — c) Ñ1.2 V1 B D वै (D1 चैव; D3.6.7 सा); T2 G1.3.6 नु (for तं). — d) Ñ1 मुदा (for महा-).

12 a) K4 B1 M (except M1.5) ततः; D4 कुक्षौ (for तत्र). S (except G1.4.5) तस्यां. — b) B1 Da2 D3.6.7 °सप्रभः; Da1 °संभवः. — c) Ñ2 V1 B4 D (except D2.5) T1 °वतेजसा. — d) D6 G4 °प्रभः. With $12^{ef}$ cf. 1. 44. $16^{cd}$. — f) Ñ3 T G3 च (for सः).

13 a)=1. 8. $14^{a}$. D2–4 S °हस्सु. — The fragm. MS. B3 ends with $13^{a}$. — b) B (B3 missing) D (except D2.3.6.7) °र्महायशाः.

14 a) D2 प्रसुप्ते; D5 M (except M1.5) तु सुप्ते; G (except G3.6) सुप्ते तु. — b) K1 °स्तमगाद्; Da Dn2 D1.5–7 T2 G M1.5 °स्तमयात् (G1 °स्तमिताद्). — c) G2 °क्षयात्. M1.5 °ये तस्मिन्. — e) T1 °नी ब्रह्मन्. — f) G

C. 1. 1884 B. 1. 47. 10 K. 1. 47. 10

वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी ॥ १४
किं नु मे सुकृतं भूयाद्भर्तुरुत्थापनं न वा ।
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् ॥१५
कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः ।
धर्मलोपो गरीयान्वै स्यादत्रेत्यकरोन्मनः ॥ १६
उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति ।
धर्मलोपो भवेदस्य संध्यातिक्रमणे ध्रुवम् ॥ १७
इति निश्चित्य मनसा जरत्कारुर्भुजंगमा ।
तमृषिं दीप्ततपसं शयानमनलोपमम् ।
उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी ॥ १८
उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति ।
संध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रतः ॥ १९
प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ।
संध्या प्रवर्तते चेयं पश्चिमायां दिशि प्रभो ॥ २०
एवमुक्तः स भगवाञ्जरत्कारुर्महातपाः ।
भार्यां प्रस्फुरमाणोष्ठ इदं वचनमब्रवीत् ॥ २१
अवमानः प्रयुक्तोऽयं त्वया मम भुजंगमे ।
समीपे ते न वत्स्यामि गमिष्यामि यथागतम् ॥ २२
न हि तेजोऽस्ति वामोरु मयि सुप्ते विभावसोः ।
अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते ॥ २३
न चाप्यवमतस्येह वस्तुं रोचेत कस्यचित् ।
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा ॥ २४
एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम् ।
अब्रवीद्भगिनी तत्र वासुकेः संनिवेशने ॥ २५
नावमानात्कृतवती तवाहं प्रतिबोधनम् ।
धर्मलोपो न ते विप्र स्यादित्येतत्कृतं मया ॥ २६
उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः ।
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजंगमाम् ॥ २७

(except G3.6) M (except M1.5) तपस्विनी.

15 b) Ś1 K1 D5 G (except G3) °पनेन वा; B4.5 °पनं प्रति. — c) K0 सुदुःखशीलो ध°. — d) Ś1m दुःखं (for कथं, which is erased). Ś1 K1 वा(K1 ना)स्यादवाप्नुयां; Da1 G1.2.6 तस्याप°.

16 G (except G3.6) M2.4 transp. 16 and 17. — D3 (hapl.) om. 16c–17b. — c) D2 स्यात्; T1 G3 M मे (for वै). — d) Ñ1.2 V1 Dn D1 G (except G3.6) M स्यादित्यत्र; D2 उत्थाने च (for स्यादत्रेति). Dn D1 M2.4 मतिं.

17 D3 om. 17ab. For G (except G3.6) M2.4 cf. v. l. 16. — b) T G M1.5 कोपो भविष्यति. — d) Ś1 K1.3.4 °क्रमणात्; B3 °क्रमदो; G3 °निष्क्रमणे. D1 °क्रमणेन तु.

18 b) Ś1 मनस्विनी; K1 G2.3 भुजंगमी. — e) G1 °मनसं; G3 °वदनं. — e) T ततः (for वचः).

19 Before 19, B3 D4 (marg.) ins. जरत्कारुरुवाच. — b) Da उपतिष्ठति. — c) D2 T1 G2.4.6 उपास्य; G3 त्वमास्व. — d) T1 M1 महाव्रत; T2 G5 M5 महाव्रतः. K3 नापो मे प्रगुणीकृताः(!); G1–5 M2–4 उ(M3 अ)पस्पृश्य महाव्रत.

20 a) K3 तथा कृता°; T1 प्राविष्कृतो°; Cd as in text. — c) B4m M (except M1.5) चैषा; G3 सेयं. — d) The MSS. vary at random between पश्चिमायां and °मस्यां.

21 Before 21, B3 D4 (marg.) ins. सूत उ°. — a) K3 M (except M1.5) तु (for स). — c) B1.3.4m.5 Da1 D2.4.5 G3.6 तां भार्यां (for भार्यां प्र-). The MSS. vary at random between °माणोष्ठ and °माणौष्ठ.

22 Before 22, B3 D4 ins. जरत्कारुरुवाच; T G (except G3.6) M (except M1.5) जरत्कारुः. — b) Ś1 K (except K3) °या मेद्य. — c) T1 पश्यामि; G5 वत्स्येहं. — d) G1.5 यथासुखं.

23 a) Ñ2 V1 B (B2 missing) D शक्तिरस्ति न वा°. — d) Ś1 K1 transp. हृदि and वर्ते°. T M वर्तते मतिः; G3 वर्तते पथि.

24 a) D3 न च मेवमतस्येह; T1 corrupt. — b) Ñ3 D (except Da D2.5) M4 वासो. — d) = 1. 39. 12d. — After 24, K0 ins.:

420* नावमानात्कृतवती दिवसोऽस्तमुपेयिवान् ।

With this line cf. 26a.

25 Before 25, B3 ins. सूत उ°; D4 (marg.) सौतिरु°; S (except G3 M1.3.5) सूतः. — d) Ś1 स्व-; K1 सु-; D5 तन्; S (except T1 G3 M1.5) तु; Cd सं- (as in text).

26 Before 26, B3 D4 (marg.) ins. जरत्कारुरुवाच (cf. v. l. 25); G3 भुजंगी. — b) Ñ1.2 V1 D (except Da D2.5) विप्र बोधनं. — d) T2 G3.6 °दित्येवं; M1.5 °दित्येव. Ñ1.2 V1 Dn D1.3.6.7 transp. कृतं and मया.

27 Before 27, K0 B3 ins. सूत उ°; K4 सौतिरु°; T1 G3.6 M1.5 सूतः. — b) D5 °र्महायशाः. — d) Ś1 K1

न मे वागनृतं प्राह गमिष्येऽहं भुजंगमे ।
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ॥ २८
सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे ।
इतो मयि गते भीरु गतः स भगवानिति ।
त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ॥ २९
इत्युक्ता सानवद्याङ्गी प्रत्युवाच पतिं तदा ।
जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा ॥ ३०
बाष्पगद्गदया वाचा मुखेन परिशुष्यता ।
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः ।
धैर्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता ॥ ३१
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ।
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ॥३२
प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ।
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ॥३३
मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ।
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ॥ ३४
त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत् ।
संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ॥ ३५
ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये ।
इममव्यक्तरूपं मे गर्भमाधाय सत्तम ।
कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसम् ॥३६
एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत् ।
यद्युक्तमनुरूपं च जरत्कारुस्तपोधनः ॥ ३७
अस्त्येष गर्भः सुभगे तव वैश्वानरोपमः ।
ऋषिः परमधर्मात्मा वेदवेदाङ्गपारगः ॥ ३८
एवमुक्त्वा स धर्मात्मा जरत्कारुर्महानृषिः ।
उग्राय तपसे भूयो जगाम कृतनिश्चयः ॥ ३९

C. 1. 1911
B. 1. 47. 43
K. 1. 47. 43

इति श्रीमहाभारते आदिपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

G2.3 भुजंगमीं.

28 Before 28, Ñ3 (*sup. lin.*) B3 D4 (marg.) ins. जरत्कारुरुवाच. — $^b$) K3 D4 गमिष्यामि. — $^c$) Ś1 G6 transp. मे and पूर्वं. — $^d$) G1 त्वया साकं.

29 $^a$) D3 G6 °मध्युषितो (G6 °तं). — $^c$) Da °ते ब्रूहि.

30 Before 30$^{ab}$, B4 ins. सूत उ°; D4 marg. सौतिरु°; S (except G3) सूतः. — $^b$) Ñ1.2 V1 Dn D1 G2 मुनिं तदा; B (B2 missing) Da D2.4 वचस्त°. — $^c$) Ś1 Da1 T1 transp. जरत्कारुं and °त्कारुः; G3 जरत्कार्वी जरत्कारुं. — $^d$) G (except G3.6) °समन्विता; M (except M1.5) °बलात्कृता (cf. 1. 42. 1$^b$; 46. 31$^f$).

31 $^a$) K (except K3) बाष्पसंदिग्धया (cf. 1. 42. 1$^d$). D2 om. 31$^c$–32$^d$. — $^c$) K1 G4.5 M2.4 कृत्वांजलिं (G6 °लिः); G2 °जलिं. — $^d$) K3.4 T G3.6 तदा. — $^e$) Ś1 K1 धर्मेमा°. — $^f$) K3.4 Dn (except Dn3) T2 G (except G3.6) प्रवेपिता; T1 विदूयता.

32 Before 32, B3 D4 (marg.) ins. जरत्कारुरुवाच. — D2 om. 32 (cf. v. l. 31). — $^a$) Ś1 मां च नार्हसि ध°. — $^b$) D3.6 G M अनागसीं (G2 °सिं). — $^c$) D4 transp. स्थितां and °तः. Ñ3 धर्मस्थित[:] स्थितां धर्मे.

33 After 33$^{ab}$, T2 G (except G3) ins.:

421* अपत्यार्थं तु मे भ्राता ज्ञातीनां हितकाम्यया ।

— K3 (hapl.) om. 33$^c$–34$^b$. — $^c$) T न तल्लब्ध°; — $^d$) Ś1 D3.4.6.7 T M1.5 वा (for मां).

34 K2 om. 34$^{ab}$ (cf. v. l. 33). — $^b$) G1.2 द्विजसत्तम. — $^c$) M2.4 अवश्यमी°.

35 $^a$) G (except G3.6) च (for मे). T M1.3 (*inf. lin.*).5 सुखं; G3.6 शुभं (for शिवं). — $^c$) G1 °न्नाथ. — $^d$) D1.3 T G3.6 M2.4 त्वयानघ; M1.3.5 तवानघ.

36 D6 reads 36$^{abcd}$ in marg. — $^a$) G6 M2.4 °नां सुखम्. G3 हितकामार्थं. — $^b$) G3 त्वामहं संप्र°. — $^c$) Dn1 D6 T2 G1.2 M इदम्. — $^d$) Ś1 K1 Dn D5.6 T1 °मादाय. — $^e$) K3 B6 महात्मानं; T G3.6 °भाग. — $^f$) D3 G M °गसीं. — B3 reads from 36$^f$ up to स (37$^a$) in marg.

37 Before 37, K0.4 D4 (marg.) ins. सौतिरु°; K3 D6 सूत उ°; S सूतः. — For B3 cf. v. l. 36. — $^a$) M1.5 transp. तु and स. — $^c$) K0.2.4 T G1-3 यदुक्त°; D4 M1.5 तदुक्त°. — $^d$) Ñ V1 Dn D1.3.6.7 G6 जरत्कारुं. D2 T1 जरत्कारो तपोधने; G3 जरत्कार्वि त्वयाधुना.

38 Before 38, B3 D4 (marg.) ins. जरत्कारुरुवाच (cf. v. l. 26). — D1 om. 38$^a$–39$^b$. — $^a$) Ñ1.2 V1 Da2 Dn D3.4.6.7 अयं; B3-5 S (except G3.6) एव (for एष). Ñ1.2 V1 Dn D3.4.6.7 transp. गर्भः and सु°. — $^b$) Ś1 K (except K3) D5 G1 °नरप्रभः; M1.5 °नरोत्तमः. — $^d$) = 1. 13. 38$^b$.

39 Before 39, B3 ins. सूत उ°; D4 (marg.) सौतिरु°

# ४४

C. 1. 1912
B. 1. 48. 1
K. 1. 48. 1

सूत उवाच ।

गतमात्रं तु भर्तारं जरत्कारुरवेदयत् ।
भ्रातुस्त्वरितमागम्य यथातथ्यं तपोधन ॥ १
ततः स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियम् ।
उवाच भगिनीं दीनां तदा दीनतरः स्वयम् ॥ २
जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत् ।
पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि ॥ ३
स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्यवान् ।
एवं पितामहः पूर्वमुक्तवान्मां सुरैः सह ॥ ४
अप्यस्ति गर्भः सुभगे तस्मात्ते मुनिसत्तमात् ।
न चेच्छाम्यफलं तस्य दारकर्म मनीषिणः ॥ ५
कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम् ।
किं तु कार्यगरीयस्त्वात्ततस्त्वाहमचूचुदम् ॥ ६
दुर्वासतां विदित्वा च भर्तुस्तेऽतितपस्विनः ।
नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ॥ ७
आचक्ष्व भद्रे भर्तुस्त्वं सर्वमेव विचेष्टितम् ।
शल्यमुद्धर मे घोरं भद्रे हृदि चिरस्थितम् ॥ ८
जरत्कारुस्ततो वाक्यमित्युक्त्वा प्रत्यभाषत ।

(cf. v. l. 38). — D1 om. $39^{ab}$ (cf. v. l. 38). — a) K3 जरत्कारुं (for स ध°). — b) Ko.4 G5.6 जरत्कारुं. K1 महाऋषिः; D2 T G3.6 M1.5 °मुनिः; G1 M2–4 °तपाः.

Colophon om. in G3. — *Sub-parvan:* All MSS. (except T2 G1; B2 missing; G3 om.) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* Ko.2.4 जरत्कारुगमनं; K3 जरत्कारुपरित्यागः; Ñ1.2 V1 जरत्कारुनिर्गमः. — *Adhy. no.:* Ś1 K1 55; Ko 42; K3 (*sup. lin. sec. m.*) T 40; B1 46; Da1 45; Dn3 47; D3.4 (marg.) 45; D5 in words 13, in figures 48; G1.4.5 M1.2.4.5 30; G2 32; G6 M3 31. — *S'loka no.:* Da1 44; Dn1 42; Dn3 43. — *Aggregate s'loka no.:* Dn2 1881.

## 44

1 Ko G3 M5 om. सूत उ°. Ś1 K1 S (G3 M5 om.) सूतः; K3.4 Ñ V1 B1 Dn D1.3.6.7 सौतिरु°. — c) Ñ2 V1 B (B2 missing) D सकाशम् (for त्वरितम्). M1.5 °स्त्विति स(M5 त)मा°. K3 Ñ V1 आगत्य. — d) The MSS. vary at random between यथातथ्यं and याथा°. K4 B1.3 D2.4 °धनाः; Da सुमध्यमा; G (except G3.6) M (except M1.5) द्विजोत्तम.

2 b)=1. 1. $95^{b}$. — cd) Ñ3 दीनाशयां (*sup. lin.* दीनां तदा as in text). Ś1 K1 भयात्; Ko.2.4 M5 ततो; K3 T2 G6 तथा (for °दा). G3 तदानीं तु ततः स्वयं.

3 Before 3, Ś1 K1.2 S (except G3) ins. वासुकिः; Ko.3.4 Ñ V1 B3–5 D वासुकिरुवाच. — a) K2.4 यत्किंचित्; K3 त्वं भर्तुः; T2 तत्कार्ये. — b) K3 प्रसवे; D1 प्रदानं. Ko.2.4 कारणं तव. K1 प्रचने (कारणं ने) कारणं च यत् (sic). — d) D1 G1.2.4–6 transp. ते and स्यात्. T G3 M1.5 पुत्रस्तेद्य (G3 °स्तव) भवेद्यदि.

4 a) K3 अस्मान्; G2.4.5 वै (for नो). M1.5 स सर्वान्किल नो भद्रे. — d) Ñ2 V1 B (B2 missing) D (except D2) तु; G1.3 च (for मां).

5 c) G3 न चेद्धाम्यफलं तस्य. — d) D1 G2.3 दानकर्म°.

6 a) M (except M1.5) तु (for च). — b) Ś1 K1 काममी°. — d) K3 G5 ततश्चाह°; D6 ततस्त्वह°; T G6 M1.5 तस्मादह°. Ko.2.4 °स्त्वाहमनूनुदं; B4 °स्त्वाहमहच्छदं (sic); D5 °स्त्वामहमब्रुवं.

7 D3 om. 7–$8^{ab}$. — a) Ñ2 V1 Dn दुर्वार्यतां; Ñ3 *sup. lin. sec. m.* क्रोधतां तां; B4 (m as in text) Da °सत्वं; D5 °चं तां; G2.4.5 °रतां; Cd as in text. K3 D6 तु (for च). — b) D5 तु; T G2.3 च (for ऽति-). G2.3 मनस्विनः (for तप°). G4.5 भर्तुस्ते निय(G5 °हि)तात्मनः. — c) B4 (m as in text) T नैवम्. — d) B1.3 Da D2.5 M (except M1.5) स (Da1 सं-); T1 तु; G1.2 च (for हि). K3 Da Dn3 शपेत मां; B1.3 D2.5 G1.2 M °द्धि मां; T1 corrupt; T2 °दिति; G3 °दृथ; G4.5 °च्च मां.

8 D3 om. $8^{ab}$ (cf. v. l. 7). — a) G3.6 सर्वं (for भर्तुः). K2 B5 M1.5 ते (for त्वं). — b) Ñ1 सर्वमेतद्; T सर्वं चैव; G3 भर्तुस्नेह-; G6 भर्तुश्चैव. K3 वासे सर्वं प्रतिष्ठितं. — c) T चैनं (for घोरं). Ñ2 V1 B (B2 missing) D उद्धरस्व च शल्यं मे. — d) Ñ2 V1 B (B2 missing) D घोरं; T M1.5 इमं; G3.6 इदं (for भद्रे). K2.4 D2.4.7 G1 M2–4 हृदि चिरं स्थितं; D5 हृदि च संस्थितं; T G3 M1.5 हृदयसं(G3 °सु)स्थितं (cf. v. l. 13).

9 Before 9, B3 D4 (marg.) ins. सौतिरु°. — b) M1.5

आश्वासयन्ती संतप्तं वासुकिं पन्नगेश्वरम् ॥ ९
पृष्टो मयापत्यहेतोः स महात्मा महातपाः ।
अस्तीत्युदरमुद्दिश्य ममेदं गतवांश्च सः ॥ १०
स्वैरेष्वपि न तेनाहं स्मरामि वितथं क्वचित् ।
उक्तपूर्वं कुतो राजन्सांपराये स वक्ष्यति ॥ ११
न संतापस्त्वया कार्यः कार्यं प्रति भुजंगमे ।
उत्पत्स्यति हि ते पुत्रो ज्वलनार्कसमद्युतिः ॥ १२
इत्युक्त्वा हि स मां भ्रातर्गतो भर्ता तपोवनम् ।
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् ॥ १३
एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा ।
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत ॥ १४
सान्त्वमानार्थदानैश्च पूजया चानुरूपया ।
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ १५
ततः स ववृधे गर्भो महातेजा रविप्रभः ।
यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि ॥ १६
यथाकालं तु सा ब्रह्मन्प्रजज्ञे भुजगस्वसा ।
कुमारं देवगर्भाभं पितृमातृभयापहम् ॥ १७
ववृधे स च तत्रैव नागराजनिवेशने ।
वेदांश्चाधिजगे साङ्गान्भार्गवाच्च्यवनात्मजात् ॥ १८
चरितव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः ।

C. 1. 1929
B. 1. 48. 19
K. 1. 48. 19

---

इति तं (for इत्युक्त्वा). K (except K1) प्रत्युवाच ह. — c) G6 संतापं (for °तप्तं). — d) D5 G (except G3.6) M (except M1.5) पन्नगोत्तमं.

10 Before 10, Ś1 K1.2 S (except T2 G1.6) ins. जरत्कारुः; K0.3.4 Ñ V1 B (B2 missing) D जरत्कारुरुवाच (D3 om. उवाच). — a) B5 वंशहेतोः. — b) K3 जरत्कारुर्महा°; M1.5 °व्रतः (for °तपाः). — c) Ñ1.2 V1 Dn °त्युत्तर°. — d) M (except M1.5) तु (for च). G4 मुनिः (for च सः). G1.5 ममेदं कृतवान्मुनिः. — After 10, D5 ins.:

422* भूय एवाभवद्भ्राता शोकसंतप्तमानसः ।

11 a) K1 हि; G2.3 स (for न). Da2 M (except M1.5) न तस्याहं; G1.5 ततो नाहं. — b) T1 G2.3 corrupt. Ñ2 V1 B (B2 missing) D वचः (for क्वचित्). — c) K4 उक्तमर्थं. Ñ3 तथा (for कुतो). S वाक्यं (for राजन्). — d) K4 विवक्षति.

12 a) Ś1 K1 मा (for न). G1-3 M2 कार्ये. — b) Ñ3 B (B2 missing) D (except Dn D1) मा(D5 स)मुद्दिश्य. G5.6 कामं प्रति. K1 Ñ2 B1.4 D2.4.6 T1 G3 M °गम. — c) Ñ1.2 V1 Dn च (for हि). Ñ3 B (B2 missing) D2-4.6.7 M1.3.5 मे (for ते). K1 पुत्रो मे; G3 मत्पुत्रो. K0 om. from पुत्रो up to 13b. — d) Ñ V1 B (B2 missing) D (except D2) °प्रभः.

13 K0 om. 13ab (cf. v. l. 12). — a) Ś1 स; K1 आशु; D2 तु; M1.5 अपि (for हि). K4 Ñ1.2 V1 Da Dn D1 T G3.6 M2-4 transp. हि and स. Ś1 मम (for स मां). K2.4 G3 मे (for मां). B1 स ततो; B3.4 (m महिषां).5 D4.6.7 स इतो (for हि स मां). — b) Ñ2.3 V1 B (B2 missing) D T1 M1.4.5 तपोधनः (D2 as in text; D5 °वने). Ś1 गतवान्स महातपाः. — d) T2 तवेदं; G1 तव यत्; G3 तदिदं. D3 हृदि संस्थितं. D6.7 तदेव(D7 °वं) हृदि संस्थितं (cf. v. l. 8).

14 Before 14, Ś1 K1 S (except T1) ins. सूतः; K0.3.4 Ñ V1 B (B2 missing) D सौतिरु° (Ñ3 D5 सूत उ°). — a) K2 च (m as in text); K4 B4 G1 M2.4 तु (for स). — c) G1 वाक्यं सः (for तद्वा°). — d) Ñ3 जगृहे तदा (for प्रत्य°).

15 a) K3 D1 transp. -मान- and -दान-. B4 °मानानु°. G3 °वाक्यैश्च; M1.5 °मानैश्च. — c) Ś1 सोदरां; K (except K1) सौं(K3 सौ)दर्यां; G3 सोदरीं. — d) G1 सोदर्यां; M3 सादरं (for स्व°). S (except T G6) पन्नगेश्वरः.

16 K1 om. 16a–17b. — a) Ñ1.2 V1 B1.3.4 D (except D2.4.5) प्र- (for स). — b) Ñ1.2 V1 B (B2 missing) D महाप्रभः (D6 as in text; D7 °प्रभुः). K3 ज्वलनार्कसमद्युतिः (=12d). — With 16cd cf. 1. 43. 12cd. — c) D2-4.6 T G3.6 °श्रेष्ठः.

17 K1 om. 17ab (cf. v. l. 16). — a) Ñ2 Dn अथ काले. G3 ततो; G6 तथा; M1.5 च सा (for तु सा). — b) K3 प्रसूता; G1 संजज्ञे; Cd as text. — With 17cd cf. 1. 13. 38d. — d) G2.4.5 नाग°.

18 a) K0.1.4 M1.5 transp. स and च. Ñ1.2 V1 B1.3.5 D तु (for च). — b) K3 बालो नागनि°. — c) K0.4 G2 चाधिजगौ; Dn D1.4 चाधिगमे. K3 सर्वान्. — d) K3 निखिलान्; D2.3.6 G1.2.4-6 M3 (*inf. lin.* as in text) भार्गव- (for भार्गवात्). Ñ1.2 V1 Dn D1 च्यवनान्मुने; M1.5 °नाद्द्विजात्. T1 G3 भार्गवच्यवनाद्द्विजात्.

19 a) Hypermetric! K2 चरित्वृतो (sic); K3.4 Ñ V1 Dn D1.4 चीर्णव्रतो. D5 corrupt. — b) D5 सत्त्वबुद्धि- (by transp.). — c) B4 यस्या° (m as in text); D3.6.7 G (except G3.6) M (except M1.5) तस्या° (for चास्या°).

C. 1. 1920
B. 1. 48. 19
K. 1. 48. 19

नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत ॥ १९
अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम् ।
वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् ॥ २०
स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान् ।
गृहे पन्नगराजस्य प्रयत्नात्पर्यरक्ष्यत ॥ २१
भगवानिव देवेशः शूलपाणिर्हिरण्यदः ।
विवर्धमानः सर्वांस्तान्पन्नगानभ्यहर्षयत् ॥ २२

इति श्रीमहाभारते आदिपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## ४५

शौनक उवाच ।
यदपृच्छत्तदा राजा मन्त्रिणो जनमेजयः ।
पितुः स्वर्गगतिं तन्मे विस्तरेण पुनर्वद ॥ १
सूत उवाच ।
शृणु ब्रह्मन्यथा पृष्टा मन्त्रिणो नृपतेस्तदा ।
आख्यातवन्तस्ते सर्वे निधनं तत्परिक्षितः ॥ २
जनमेजय उवाच ।
जानन्ति तु भवन्तस्तद्यथावृत्तः पिता मम ।
आसीद्यथा च निधनं गतः काले महायशाः ॥ ३
श्रुत्वा भवत्सकाशाद्धि पितुर्वृत्तमशेषतः ।

---

K4 B3 Da2 M1.5 भवेत्. K3 स्फीतं; G1 लोके (for ख्यातं) — d) Ś1 K1 लोके चा°; Ko.2 S लोकेष्व° (M5 as in text; G1 ख्यातिरास्तीक); D6 लोके ह्या°.

20 b) T1 G1.3 M2.5 च; G2.4.5 स: (for तम्). — cd) Ko.2 D5 तत:; T G6 M1.5 एवं (for वनं). B4m तात (for तस्य). Ś1 K1 °स्तीक इति श्रुतं; T1 आस्तीकेति च वि°. G2.4.5 तस्मादिदं (G2 °मं) तस्य नामा(G2 interp. आ)स्तीकेति च वि°.

21 a) B4 सर्वान् (m स बाल as in text). — d) K3 Ñ1.3 T G3 M1.3 (*inf. lin.*).5 समंतात् (for प्रयत्नात्). Ko.2.4 परिरक्ष्यते; Ñ V1 D परिरक्षित:.

22 a) D3.6.7 °वानपि. — b) Ś1 (*sup. lin.*) K4 Ñ2 V1 B4.5 (both m as in text) Dn हिरण्मय:; T1 G3 °ण्यज:; T2 G1.2.4–6 M (except M1.5) पिनाकधृक् (G1.2 °धृत्). ※Dev: हिरेण्यद्रो (sic) ज्ञानद: ।※ — c) G3 स (for वि-). T1 तान्सर्वान् (by transp.). — d) Ko अभ्यरक्षयत्; Ñ1.3 पर्यहर्ष°.

Colophon. D3 lacuna. — *Sub-parvan:* All MSS. (except Ko.2.4 T2) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* K (except K1) आस्तीकोत्पत्ति:. — *Adhy. no.* (figures, words or both): Ś1 K1 56; Ko 43; K3 (*sup. lin. sec. m.*) T 41; Ñ1.2 V1 48; B1 47; Da1 D4 (marg.).6 46; D5 14; G M 31 (G2 33; G3.6 M3 32). — *S'loka no.:* Ñ3 Dn 22; Da1 23. — *Aggregate s'loka no.:* Dn2 1903.

**45**

1 D3 om. शौनक उ°, but has lacuna at that place. Ś1 K1 S (G3 with prefixed श्री) शौनक:. — After शौनक उ° (or its v. l.), D3 G (except G3.6) ins.:

423* सूतस्य वचनं श्रुत्वा शौनक: प्राह विस्मित: ।

— a) K3 Ñ1.3 V1 B1.4.5 D (except Dn D1.5) G (except G4.5) ततो (for °दा). — c) G1 मे तु (for तन्मे).

2 Ś1 K1 D3 S (G3 with prefixed श्री) सूत:; K3.4 Ñ1.2 V1 B1 Dn D1 सौतिरु°. — M3.4 om. 2 and जनमे° उ° (3). — a) Ñ1 राजन्; Ñ3 राज्ञा (for ब्रह्मन्). K4 Ñ2 V1 B1.3.4 D (except D2) T1 पृच्छन्. B5 शृणवपृच्छद्यथा ब्रह्मन्. — b) Ñ2 V1 B (B2 missing) D (except D2) T1 नृपतिस्; Ñ3 भूपतेस्. K2.4 B5 तथा. — c) Ñ2 V1 B (B2 missing) D (except D2) यथा चा(D5 ज्या)ख्यात-वंतस्ते. — d) The MSS. vary at random between परिक्षित: and परी° (cf. v. l. 1. 1. 8).

3 K1 D3.6 S (M3.4 om. the ref.) om. उवाच. — With $3^{ab}$ cf. $6^{cd}$. — a) Ko.2.4 च; Ñ1 न; Ñ3 M2.4 हि; B (B2 missing) D स्म (for तु). D2 भवंतोस्य (for भवंतस्तद्). — b) M4 पितुर्मम. Ñ1.2 V1 B (B2 missing) D T2 G यथावृत्तं पितुर्मम. — cd) Ś1 आपद्यथा; K1 आप यथा. Ñ2.3 (*sup. lin.*) V1 B (B2 missing) D स (D6 सं-) (for च). Ś1 K1 स तत् (for गत:). K3 आचक्षध्वं यथाकामं कथं च निधनं गत:.

4 a) T2 °त्सकाशं तु. K3 T1 G3.6 तु; D6 वै (for हि). — b) T2 G3.5 पितृवृत्त°. — c) Ś1 K (except K3) °पत्स्येहं. — d) Ś1 तु (*sup. lin.* म as in text).

5 T2 om. सूत उ°. Ś1 K1 S सूत:; Ko.3.4 Ñ1.2 V1 B1 Dn D1 सौतिरु°. — a) Ś1 K1 °धावदन्वा°. — b) G2.4.5 ससादरं (for महा°). — c) Ñ2.3 V1 Dn D1.4 G (except G3.6) M (except M1.5) सर्वे धर्म°.

कल्याणं प्रतिपत्स्यामि विपरीतं न जातुचित् ॥ ४

सूत उवाच ।

मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन महात्मना ।
सर्वधर्मविदः प्राज्ञा राजानं जनमेजयम् ॥ ५
धर्मात्मा च महात्मा च प्रजापालः पिता तव ।
आसीदिह यथावृत्तः स महात्मा शृणुष्व तत् ॥ ६
चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत ।
धर्मतो धर्मविद्राजा धर्मो विग्रहवानिव ॥ ७
ररक्ष पृथिवीं देवीं श्रीमानतुलविक्रमः ।
द्वेष्टारस्तस्य नैवासन्स च न द्वेष्टि कंचन ।
समः सर्वेषु भूतेषु प्रजापतिरिवाभवत् ॥ ८
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु ।
स्थिताः सुमनसो राजंस्तेन राज्ञा स्वनुष्ठिताः ॥ ९
विधवानाथकृपणान्विकलांश्च बभार सः ।
सुदर्शः सर्वभूतानामासीत्सोम इवापरः ॥ १०
तुष्टपुष्टजनः श्रीमान्सत्यवाग्दृढविक्रमः ।
धनुर्वेदे च शिष्योऽभून्नृपः शारद्वतस्य सः ॥ ११
गोविन्दस्य प्रियश्चासीत्पिता ते जनमेजय ।
लोकस्य चैव सर्वस्य प्रिय आसीन्महायशाः ॥ १२
परिक्षीणेषु कुरुषु उत्तरायामजायत ।
परिक्षिद्भवत्तेन सौभद्रस्यात्मजो बली ॥ १३
राजधर्मार्थकुशलो युक्तः सर्वगुणैर्नृपः ।
जितेन्द्रियश्चात्मवांश्च मेधावी वृद्धसेवितः ॥ १४
षड्वर्गविन्महाबुद्धिर्नीतिधर्मविदुत्तमः ।
प्रजा इमास्तव पिता षष्टिं वर्षाण्यपालयत् ।
ततो दिष्टान्तमापन्नः सर्पेणानतिवर्तितम्* ॥ १५

C. 1. 1949
B. 1. 49. 17
K. 1. 49. 17

---

6 Before 6, Ś1 K1 G6 ins. मंत्रिणः; Ko.2.4 Ñ V1 B (B2 missing) D मंत्रिण ऊचुः. — After मंत्रिण ऊचुः, K4 Ñ V1 B (B2 missing) D (except D5) ins.:

424* शृणु पार्थिव यद्ब्रूषे पितुस्तव महात्मनः ।
चरितं पार्थिवेन्द्रस्य यथा निष्ठां गतश्च सः ।

[ (L. 1) K4 Ñ3 शृणु राजन्यथा ब्रूषे. Ñ3 °स्तवमशेषतः. ] — $^{ab}$) D2 स धर्मात्मा; G6 धर्मज्ञश्च (for धर्मात्मा च). G1 प्रजाहेतो (for महात्मा च). G2.4–6 transp. महात्मा च and प्रजा°. — With $6^{cd}$ cf. $3^{ab}$. — $^{d}$) G1.5 महात्मन्.

7 $^{a}$) Ś1 (*sup. lin.* as in text) च; G1 सु- (for स्व-). — $^{b}$) D3.6 कृत्वा वै (for स कृ°).

8 $^{a}$) T G (except G3) M1.5 अरक्षत्. D1 पृथिवीं सर्वां; G2.4.5 प्रथितः पृथ्वीं. — $^{b}$) = 1. 18. $1^{d}$. — $^{c}$) T1 G3 M1.5 वै नासन्. — $^{d}$) Ś1 K1 स च नाद्वेष्ट. Ko Ñ V1 B5 Da Dn D4 transp. न and द्वेष्टि. B1 स च द्वेष्टि च; B1m D2 न स द्वेष्टि च. B4 स च द्वेष्टि न कस्यचित्.

9 $^{b}$) K3 स्वकर्मणि; B4 स्वकर्मभिः (m as in text). — $^{d}$) Ko.2.3 Ñ3 V1 B (B2 missing) D स्वधिष्ठिताः.

10 $^{ab}$) Ñ1.2 V1 Dn D1.3.6.7 transp. °कृपणान् and विकलान्. K3 स पोषयन्; M1.5 बभार तान्.

11 $^{a}$) B1 हृष्टपुष्ट°; D3.6.7 पुष्टस्तुष्ट°; M1.5 इष्टपुष्ट°. — $^{b}$) B4 G5 सत्यवान्. Ś1 K (except K3) Ñ1.3 B1.3.5 D5 दृढसंगतः (D5 °तिः); B4 गूढवि° (m as in text); D2 °संमतः; D3 °निश्चयः; G1 °संकरः. — G2 reads $14^{c}$–$15^{b}$ before $11^{cd}$; T G3.6 M, after $11^{cd}$. — $^{c}$) Ñ3 V1 B3–5 D G3 तु (D3.6 as in text; D5.7 अपि); M1.5 स (for च). T वेदे च (for शिष्योऽभून्). — $^{d}$) D2 च; M1.5 तु (for सः). K3 कृपस्य [? स] महात्मनः; T शिष्यः शारद्वतस्य ह.

12 $^{d}$) K3 प्रियवाक्सु-; K4 प्रियश्चासीन्. G3 महातपाः.

13 $^{b}$) Ś1 चोत्तरायां; K3 Ñ1.2 V1 B (B2 missing) D सोत्त°; T ह्युत्त°. Ś1 K Ñ V1 Dn D1.5 M (except M1.5) अजीजनत्. — $^{c}$) A few N and most S MSS. परीक्षि° (cf. v. l. 2). G3 तस्मात् (for तेन). — $^{d}$) D2 नृप (for बली).

14 $^{a}$) Ñ1 G3.5.6 M (except M1.5) राजा (for राज-). M2.4 सर्वार्थ° (for -धर्मार्थ°). — $^{b}$) Ñ2 V1 Dn (except Dn1) D1 वृतः (for नृपः). — G2 reads $14^{cd}$ before $11^{cd}$; T G3.6 M, after $11^{cd}$. — $^{c}$) B4m.5 Dn3 चार्थवांश्च; D3.6 चाप°; Cd as in text. — $^{d}$) K3 धर्मज्ञो; Cd मेधावी (as in text). K1 Ñ1.3 T2 वृद्धसेविता; K2.3 M2–4 °सेवकः; Ñ2 V1 B (B2 missing) D धर्मसेविता (B5 D3 धर्मसेवितः; D5 सर्वसेवितः); G1.4.5 °संमतः; G2.3.6 M1.5 °सेवया.

15 G2 reads $15^{ab}$ before $11^{cd}$; T G3.6 M, after $11^{cd}$. — $^{a}$) Ñ3 V1 B1.3 D T2 G (except G2.3) षड्वर्गजिन् (Da as in text; D3 षडूर्मिजि°; D6.7 षडूर्मिवि°). G1.4.5 महाप्राज्ञो. — $^{b}$) Ñ2 V1 B (B2 missing) D नीतिशास्त्र°; G6 नीतिकर्म°. Ko.2.4 नीतिधर्मार्थवित्तमः; M1.5 नीतं धर्मविशारदः. — $^{d}$) Ko.2.4 Ñ V1 B1.3 Da Dn2 D1.3.5.7 M3 षष्टि-; T1 G2.5 षष्टिर्. — After $15^{d}$, G3 ins.:

425* ततो गतिं समापन्नः सर्वेषामनिवर्तिनीम् ।

C. 1. 1949
B. 1. 49. 16
K. 1. 49. 18

ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान् ।
इदं वर्षसहस्राय राज्यं कुरुकुलागतम् ।
बाल एवाभिजातोऽसि सर्वभूतानुपालकः ॥ १६

जनमेजय उवाच ।

नास्मिन्कुले जातु बभूव राजा
यो न प्रजानां हितकृत्प्रियश्च ।
विशेषतः प्रेक्ष्य पितामहानां
वृत्तं महद्वृत्तपरायणानाम् ॥ १७

कथं निधनमापन्नः पिता मम तथाविधः ।
आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः ॥ १८

सूत उवाच ।

एवं संचोदिता राज्ञा मन्त्रिणस्ते नराधिपम् ।
ऊचुः सर्वे यथावृत्तं राज्ञः प्रियहिते रताः ॥ १९
बभूव मृगयाशीलस्तव राजन्पिता सदा ।
यथा पाण्डुर्महाभागो धनुर्धरवरो युधि ।
अस्मास्वासज्य सर्वाणि राजकार्याण्यशेषतः ॥ २०
स कदाचिद्वनचरो मृगं विव्याध पत्रिणा ।
विद्ध्वा चान्वसरत्तूर्णं तं मृगं गहने वने ॥ २१
पदातिर्बद्धनिस्त्रिंशस्तताायुधकलापवान् ।
न चाससाद गहने मृगं नष्टं पिता तव ॥ २२
परिश्रान्तो वयःस्थश्च षष्टिवर्षो जरान्वितः ।
क्षुधितः स महारण्ये ददर्श मुनिमन्तिके ॥ २३
स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रतान्वितम् ।
न च किंचिदुवाचैनं स मुनिः पृच्छतोऽपि सन् ॥ २४

---

— e) K0.2.4 दिष्ट्वा(K4 °ष्ट्वा)तमगमत्. Cd has दिष्टांतं (as in text). — f) Ś1 सर्वे(*sup. lin.* सर्पे)णानतिवर्तिनां; K0.2 सर्वेषामनि(K0 °मपिनि)वर्तनं; K1 °वर्तितां; K3 सर्वे प्राप्यानिवर्तनं; K4 सर्पेणेति विनिश्चितं; Ñ1 सर्वेषां न निवर्तिनां; Ñ2 V1 B (B2 missing) D सर्वेषां दुःखमावहन्; Ñ3 सर्वेशाश्यतिवर्तिनां; T1 °तिपर्वणा; T2 G M2.4 °वर्तिना (G6 °नम्); M1.3 (*inf. lin.* as in T2 etc. above).5 सर्वैरनतिवर्तितं.

16 a) K2.3 Ñ1 M (except M1.5) °षड्याघ्र. — c) Ñ1.2 V1 °सहस्राणि; T1 G3 °स्त्रं तु; M1.5 °स्रांतं. — d) T G2–6 M1.5 कलियुगा(T1 G3.6 °गे)गतं (G3 शतं); G1 M2.4 कुलधरागतं; M3 कलियुगे सति. — e) Ñ1.3 V1 B (B2 missing) D4.6.7 °भिजानासि; Ñ2 Dn °भिषिक्तस्त्वं; Da °भिजानाति. — f) Ś1 सर्वभूताभिपालक; Ñ1.3 V1 °पालनं; B (B2 missing) D3.4.6.7 °भिपालनं; T G3.6 M1.3 °नुकंपनः; M5 सर्व एवानुकंपनः.

17 Ś1 (with prefixed श्री) K1.2 D6 S जनमेजयः. — a) K1 नास्मत्कुले. — b) K4 Ñ3 D1.3.6.7 G1.2.4.5 M2 नः; G3 ना (for न). Ñ3 G3.4 (*sup. lin.* as in text) प्रियाणां (Ñ3 °नां). K3 Ñ V1 Dn D1 S प्रि(T1 प्रे)यकृत्. K3 M3 हितश्च. — c) G6 महीपतीनां (for पिता°). K0.3.4 विशेषतोस्मत्प्रपिताम°. — d) T2 G (except G3) महावृत्त°.

18 K0 om. 18cd. — c) Ñ3 आचक्ष्व वै. K3 यथातथ्यं; D2 T G3.6 M1.5 य(G3 त)था तन्मे. — d) K3 °मि कृत्स्नशः.

19 K0–2 D5 om. सूत उ°. Ś1 D6 S सूतः; K3.4 Ñ1.2 V1 B1.3.5 Dn D1.2 सौतिरु°. — a) K2–4 D5 सं(K3 स)नोदिता (D5 °तो). G (except G3.6) तेन (for राज्ञा). — b) Ś1 K1 त(K1 य)थोदितं (for नरा°). — K2 om. 19c–20b. — c) K1 Ñ1.2 V1 D3.7 G2.4.5 M1 सर्वं. K3 Ñ V1 T G3 M1.5 यथातत्वं. — d) Ñ2 V1 Dn D1 M3 °हितैषिणः. — After 19, Ś1 ins. (the fig.) ५७ (adhy. no.!)

20 K2 om. 20ab (cf. v. l. 19). Before 20, Ś1 K0.1 D6 T2 G1.3–5 M1.5 ins. मंत्रिणः; K4 Ñ1.2 V1 B (B2 missing) Da Dn D1.3–5.7 मंत्रिण ऊचुः. — K4 Ñ V1 B (B2 missing) D ins. after मंत्रिण ऊचुः (resp. its v. l.) (Ñ3 D2 which om. the ref. altogether, after 19):

426* स राजा पृथिवीपालः सर्वशस्त्रभृतां वरः ।

Cf. 1. 36. 9. — c) Ñ2 V1 B (B2 missing) D M3 महाबाहुः; Ñ3 °योधो; G1 M1.2.4.5 °राजो; G2.4.6 °बाहो. — e) K3 कर्माणि; B5 राज्या°; T2 धर्मा° (for सर्वा°). — f) K0 राज्य°; B5 सर्वं°. G3 कार्याण्यानीय सर्वशः.

21 a) K0.2 मृगवने; K4 वनं गत्वा; Ñ1.2 V1 B (B2 missing) D G (except G1.3) वनगतो (D5 as in text; D3.6.7 वनं यातो); M1 वनधरो. — c) Ś1 K1.4 चानु°; T2 G6 M1.4.5 चान्वचर°; G1 सो व्यचर°; G3 चाभ्यपत°; G4.5 सोन्व° (for चान्व°). G2 विध्वंसो विचर°. — d) T1 न; T2 G3.6 M1.5 स (for तं).

22 b) Ś1 (*sup. lin.* as in text) K0.2.4 तथायुधकलापधृत् (K2.4 °धृक्); K1 Ñ1.3 °कलापधृक्; K3 °तूणायुधकलापधृक्; D1.2 तथायुध°; S शरपाणिर्धनुर्धरः. — c) D2 नैवास°; D5 न वास°; G3 स चास°.

23 a) G2.3 पथि श्रांतो. — b) D3.7 T2 G2.4.5

ततो राजा क्षुच्छ्रमार्तस्तं मुनिं स्थाणुवत्स्थितम् ।
मौनव्रतधरं शान्तं सद्यो मन्युवशं ययौ ॥ २५
न बुबोध हि तं राजा मौनव्रतधरं मुनिम् ।
स तं मन्युसमाविष्टो धर्षयामास ते पिता ॥ २६
मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात् ।
तस्य शुद्धात्मनः प्रादात्स्कन्धे भरतसत्तम ॥ २७
न चोवाच स मेधावी तमथो साध्वसाधु वा ।
तस्थौ तथैव चाक्रुध्यन्सर्पं स्कन्धेन धारयन् ॥ २८

इति श्रीमहाभारते आदिपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## ४६

मन्त्रिण ऊचुः ।

ततः स राजा राजेन्द्र स्कन्धे तस्य भुजंगमम् ।
मुनेः क्षुत्क्षाम आसज्य स्वपुरं पुनराययौ ॥ १
ऋषेस्तस्य तु पुत्रोऽभूद्गवि जातो महायशाः ।
शृङ्गी नाम महातेजास्तिग्मवीर्योऽतिकोपनः ॥ २
ब्रह्माणं सोऽभ्युपागम्य मुनिः पूजां चकार ह ।
अनुज्ञातो गतस्तत्र शृङ्गी शुश्राव तं तदा ।
सख्युः सकाशात्पितरं पित्रा ते धर्षितं तथा ॥ ३
मृतं सर्पं समासक्तं पित्रा ते जनमेजय ।
वहन्तं कुरुशार्दूल स्कन्धेनानपकारिणम् ॥ ४
तपस्विनमतीवाथ तं मुनिप्रवरं नृप ।
जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुते ॥ ५

C. 1. 1969
B. 1. 50. 6
K. 1. 50. 8

---

धर्षितवर्षो; T1 M1.5 °वर्प-. — c) G1 सु- (for स). G6 तदारण्ये. — d) Ñ2 V1 Dn D1 मुनिसत्तमं.

24 b) Ś1 °व्रताश्रितं; Ñ2 V1 D (except D5) M (except M1.5) °व्रते स्थितं. — c) Ś1 °वाचास्य; Ñ1.2 V1 B1 Dn D1 °वाचेदं. — d) K1 मुनिं; G1.2 पुनः. M2.4 पृष्ट उत्तरं. Ś1 K1 वै (for सन्). K0.2.4 Ñ1.2 V1 B (B2 missing) D पृष्टोपि स (D5 च) मुनिस्तदा; M3 राजानं पृष्ट उत्तरं (*inf. lin.* as in text, reading only ह for अपि).

25 a) T2 G4.5 M2.4 दृष्ट्वा (for राजा). Ś1 क्षुत्तृषार्तः; D1 श्रमार्तस्तं; D5 क्षुधार्तः सन्. — b) D1 मुनिं स्थाणुमिव स्थितं; T1 तं स्थाणुमिव च स्थि°. — c) Ñ3 दान्तं; G3 M श्रांतः (M4 श्रांतं). — d) Ñ2 V1 B1.3.4 D (except D2.5) T2 G6 गतः; B5 गतं (for ययौ).

26 a) Ñ2 V1 B4 Dn D1 च (for हि). — c) Ñ2 V1 B4 (m as in text) D (except D2.5) क्रोधसमा°.

27 b) K3 महीतलात्. — d) Ś1 K1 Da1 G1.2.6 M1.3.5 °सत्तमः.

28 a) G6 तं नोवाच स; M1.3.5 स न चोवाच. — b) K (except K1) वचनं; G1 तमसौ; G3.6 राजानं (for तमथो). — c) Ś1 K1 न चैव (for तथैव). K1 G1 न क्रु°; Ñ V1 B (B2 missing) D T1 चाक्रुद्धः; G6 M1.5 नाक्रुध्यत्.

Colophon. *Sub-parvan:* All MSS. (except K2 Dn3) आस्तीक (v. l. आस्तिक, अस्तीक); to it Ñ1.2 V1 add पारिक्षितीय. — *Adhy. name:* K (except K1) मंत्रिवाक्यं. — *Adhy. no.* (figures, words or both): K0 44; K3 (*sup. lin. sec. m.*) T 42; Ñ1.2 V1 Dn3 49; D3.4 (marg.) 47; D5 15; G M 32 (G2 34; G3.6 M3 33). — *S'loka no.:* Ñ3 32; Da1 33; Dn 31. — *Aggregate s'loka no.:* Dn2 1934.

### 46

1 Ś1 K1 S मंत्रिणः; K2 सूत उ°. — c) K3 वक्ष्यसि चा°; M (except M1.5) क्षुधार्त आ°. D5 आसाद्य. — d) K2 Ñ2 V1 B (B2 missing) D प्रययौ पुनः (for पुन°).

2 b) T2 G6 भुवि. K0.2.4 Ñ3 D1.3.6.7 महातपाः. — d) D3.4.6.7 दुष्प्रसादोति°; G3 स्निग्धविद्योति°; M1.3.5 तिग्मकोपोतिदारुणः.

3 a) Ś1 T2 G1.6 सोप्युपा°; Ñ2 V1 Dn D1.3.5–7 समुपा°; B (B2 missing) Da D2.4 स उपा°. — c) Ś1 K1 Ñ1.3 B (B2 missing) Da D3.6.7 स यज्ञाय (Da D3.6.7 °या-) ग°; Ñ2 V1 Dn D1 G2.4.5 सोनुज्ञातस् (G2.4.5 °ज्ञाय) ततस्त°; D2.4 T G6 M सोनुज्ञाय (D2.4 °या-; T1 M2–4 °तो) गतस्तत्र (G6 °स्य); G1 सोनुज्ञातो मुनिस्त°; G3 नानुज्ञाय ततस्त°. — d) D5 G1.3 M1.3.5 तत् (for तं). — T1 (? hapl.) om. 3c–6b. — f) K3 Ñ3 B4 G (except G1) M तदा; Ñ1.2 V1 B1.3.4m.5 D पुरा.

4 T1 om. 4 (cf. v. l. 3). — a) Ñ1 T2 G2.4.5 समायुक्तं; G3.6 M1.5 तथास°. — b) Ñ1.2 V1 B (B2 missing) D स्थाणुभूतस्य तस्य तं (D2 ह). — c) Ñ2 V1 Dn M (except M1.5) राजज्ञा°.

C. 1. 1969
B. 1. 50. 6
K. 1. 50. 6

तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं तथा ।
शुभाचारं शुभकथं सुस्थिरं तमलोलुपम् ॥ ६
अक्षुद्रमनसूयं च वृद्धं मौनव्रते स्थितम् ।
शरण्यं सर्वभूतानां पित्रा विप्रकृतं तव ॥ ७
शशापाथ स तच्छ्रुत्वा पितरं ते रुषान्वितः ।
ऋषेः पुत्रो महातेजा बालोऽपि स्थविरैर्वरः ॥ ८
स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह ।
पितरं तेऽभिसंधाय तेजसा प्रज्वलन्निव ॥ ९
अनागसि गुरौ यो मे मृतं सर्पमवासृजत् ।
तं नागस्तक्षकः क्रुद्धस्तेजसा सादयिष्यति ।
सप्तरात्रादितः पापं पश्य मे तपसो बलम् ॥ १०
इत्युक्त्वा प्रययौ तत्र पिता यत्रास्य सोऽभवत् ।
दृष्ट्वा च पितरं तस्मै शापं तं प्रत्यवेदयत् ॥ ११

स चापि मुनिशार्दूलः प्रेषयामास ते पितुः ।
शप्तोऽसि मम पुत्रेण यत्तो भव महीपते ।
तक्षकस्त्वां महाराज तेजसा सादयिष्यति ॥ १२
श्रुत्वा तु तद्वचो घोरं पिता ते जनमेजय ।
यत्तोऽभवत्परित्रस्तस्तक्षकात्पन्नगोत्तमात् ॥ १३
ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते ।
राज्ञः समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत ॥ १४
तं ददर्शाथ नागेन्द्रः काश्यपं तक्षकस्तदा ।
तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं व्रजन् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति १५

काश्यप उवाच ।

यत्र राजा कुरुश्रेष्ठः परिक्षिन्नाम वै द्विज ।
तक्षकेण भुजंगेन धक्ष्यते किल तत्र वै ॥ १६

---

5 T1 om. 5 (cf. v. l. 3). — a) G1.6 महात्मानं; G2.4.5 गतक्रोधं (for अती°). — b) G1 तदा (for नृप). — d) Ñ V1 Dn D1 G (except G3.6) °च्छ्रुतं.

6 T1 om. 6ab (cf. v. l. 3). — b) D2 श्रेष्ठं सुनियतं. Ñ1.2 V1 D5 T2 G (except G3.6) M1.5 तदा; Dn D1.3.6.7 सदा. — c) G3 M3 (*inf. lin.* as in text) °कारं (for °चारं). — d) Ñ V1 B (B2 missing) D (except D6) M1.5 सुस्थितं. T1 तमलोकयत्; G3 धर्मलो°.

7 c) Ś1 K (except K1) Ñ1.3 °भूतेषु. — d) Ñ1.2 V1 B (B2 missing) D (except D5) विनिकृ°. K1 तथा. T1 G (except G3.6) पित्रा ते विकृतं तदा.

8 a) Ñ3 V1 B (B2 missing) D महातेजाः (for स त°). Ś1 शशाप स च तच्छ्रु°; K3 शृंगी शशाप तच्छ्रु°. — c) K2.4 B1 G1.6 ऋषिपु°. — d) Ñ1.2 V1 B (B2 missing) D (except D5) स्थविरद्युतिः; T1 °रैः सह; G1 °रो गुणैः; G3 °रैः समः; M1.5 °रैर्वृतः. Cd mentions स्थविरैः (as in text).

9 b) K0.2.4 °दमभाषत. — c) D5 तेपि संरब्धः.

10 Before 10, B3 ins. शृंग्युवाच. — c) D2 तेजसा (for तक्षकः). — d) = 12f. Ś1 (*sup. lin.* as in text) दाहयि°; K1 धर्ष°; K2 शात°; Ñ3 V1 B (B2 missing) D (except D2.5) प्रदहि°; T G2 साध°; G1 दंश°; G3 सूद°; G5 विदहि°. — After 10cd, K4 B3.5 m Dn D1.4.5 ins.:

427* आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ।

— e) M1.5 इमं (for इतः). — f) G3 दृश्यतां पन्नगोत्तम.

11 Before 11, B3 ins. मंत्रिण ऊ°. — a) B (B2 missing) D (except Dn D1) स (for प्र-). — b) Ś1 यत्र सोस्य पिताभवत्. — d) Ñ1.2 V1 B (B2 missing) D transp. शापं and तं. Ñ3 स्वं (for तं).

12 b) Ñ3 V1 प्रेरया°. G3 M4 विभुः (for पितुः). — After 12ab, K4 (om. line 1) Ñ3 V1 B3 D (except D3.5–7) ins.:

428* शिष्यं गौरमुखं नाम शीलवन्तं गुणान्वितम् ।
आचख्यौ स च विश्रान्तो राज्ञः सर्वमशेषतः ।

[ (L. 2) K4 Da वृत्तांतं (for विश्रान्तो). D2 राज्ञ आह यथा मुनिः. ]

— f) = 10d. Ś1 (*sup. lin.* as in text) K1 °सा दाहयि°; Ñ3 V1 B1.3.4 m.5 Da Dn D1.4.6.7 °सासौ दहिष्य°; B4 °सा पातयि°; D3 °सा प्रदहिष्य°; G2 °सा साधयि°. D5 T G1.3.6 M सप्तरात्रेण धक्ष्यति.

13 a) K0 अथ; K1.2.4 B1.4.5 D4 G2.4.5 सः; K3 Ñ1.2 V1 B3 Da Dn D1.3.5–7 च (for तु).

14 Here and below many N MSS. write कश्यप- for काश्यप-.

15 K3 D7 (hapl.) om. 15bc. — b) Ñ V1 B (B2 missing) Da Dn D1.2.4–6 T M1.3.5 transp. काश्यपं and तक्षकः. D3 कंपंतं तक्षकं तदा. — c) G3 M1.5 स (G3 च) नागेन्द्रः. — d) D5 त्वरितोदितं. Ñ3 V1 B (B2 missing) Da Dn D1.2.4.6.7 द्विजं; D3 तदा; T1 ब्रुवन्. — 15ef = 1. 38. 35cd. — e) K3 नु भोः; G3 भो वा (for भवान्). Ś1 G3–5 स्वरितं. K0.3 G3 M1 यासि. G3 om. 15f–17c. — f) Ś1 से (for च). Ś1 K1 भविष्यति; B4 G2

गच्छाम्यहं तं त्वरितः सद्यः कर्तुमपज्वरम् ।
मयाभिपन्नं तं चापि न सर्पो धर्षयिष्यति ॥ १७
तक्षक उवाच ।
किमर्थं तं मया दष्टं संजीवयितुमिच्छसि ।
ब्रूहि काममहं तेऽद्य दद्मि स्वं वेश्म गम्यताम् ॥१८
मन्त्रिण ऊचुः ।
धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः ।
तमुवाच महात्मानं मानयञ्श्लक्ष्णया गिरा ॥ १९
यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम् ।
गृहाण मत्त एव त्वं संनिवर्तस्व चानघ ॥ २०
स एवमुक्तो नागेन काश्यपो द्विपदां वरः ।
लब्ध्वा वित्तं निववृते तक्षकाद्यावदीप्सितम् ॥ २१
तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः ।
तं नृपं नृपतिश्रेष्ठ पितरं धार्मिकं तव ॥ २२
प्रासादस्थं यत्तमपि दग्धवान्विषवह्निना ।
ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः ॥ २३
एतद्दृष्टं श्रुतं चापि यथावन्नृपसत्तम ।
अस्माभिर्निखिलं सर्वं कथितं ते सुदारुणम् ॥ २४
श्रुत्वा चैतं नृपश्रेष्ठ पार्थिवस्य पराभवम् ।
अस्य चर्षेरुत्तङ्कस्य विधत्स्व यदनन्तरम् ॥ २५

C. 1. 1991
B. 1. 50. 31
K. 1. 50. 31

---

चिकीर्षितं; Da1 °र्दयेते.

16 G3 om. 16 (cf. v. l. 15). Ś1 K1.2 D6 S om. उवाच. — $^{b}$) A few N MSS. and most S MSS. परी° (for परि°); cf. v. l. 1. 1. 8; 36. 8 etc. V1 K2.4 -त:; V1 B4 Da D3.4.6.7 स: (for वै). K2 Da1 D3 द्विज:; S (except G6; G3 om.) नृप:. D1 °क्षिदभिमन्युज. — $^{c}$) Ś1 K0–3 B5 Da2 Dn (except Dn2) D1.5–7 G2.4.5 °केन. K4 तक्षको नाम नागेंद्र:. — $^{d}$) Dn D1 सोद्य; T2 यत्र (for तत्र).

17 G3 om. $17^{abc}$ (cf. v. l. 15). — $17^{ab}$ =(var.) 1. 38. $37^{ef}$. — $^{a}$) M1.5 इच्छा°. B4 D3.6.7 त्वरितं. — $^{c}$) G (G3 om.) M (except M1.5) °भिमन्त्रितं (G1 M3 °त:). — $^{d}$) K3 सर्पो नाभिभविष्यति.

18 Ś1 K1 D6 S (T1 om. the ref.) om. उवाच. — $^{a}$) G1.2.5 M1.5 त्वं (for तं). G1 द्विजश्रेष्ठ. — K4 (om. line 7) Ñ V1 B (B2 missing) D T1 ins. after $18^{ab}$: G4.5 (om. lines 1, 2, 7), after 18:

429* अहं स तक्षको ब्रह्मन्पश्य मे वीर्यमद्भुतम् ।
न शक्तस्त्वं मया दष्टं तं संजीवयितुं नृपम् ।
इत्युक्त्वा तक्षकस्तत्र सोऽदशद्वै वनस्पतिम् ।
स दष्टमात्रो नागेन भस्मीभूतोऽभवन्नगः ।
काश्यपश्च ततो राजन्नजीवयत तं नगम् । [5]
ततस्तं लोभयामास कामं ब्रूहीति तक्षकः ।
स एवमुक्तस्तं प्राह काश्यपस्तक्षकं पुनः ।

[ (L. 2) Da D3.6.7 °तुं स्वयं. — (L. 6) For G4.5 see below. — (L. 7) B (B2 missing) एवमुक्तस्तु (for स एव°). D5 तक्षकेनैवमुक्तस्तु प्रोवाचेदं स कश्यप:. ]
— Ñ2.3 V1 B (B2 missing) D T1 M3 om. $18^{cd}$. — G4.5 repeat $18^{cd}$ after line 6 of 429*, an indication that the passage is interpolated in G4.5. — $^{c}$) Ś1 K1.4 Ñ1 M2.4 कं ते; K0.2 किं ते; T2 G4.5 तं ते; G2.6 तत्ते; G3 दास्ये; M1.5 किं तु (for तेऽद्य). — $^{d}$) G3 यदि (for दद्मि).

19 Ñ2 V1 B (B2 missing) D G3 om. मन्त्रिण ऊ°. Ś1 K1 मंत्रिण:; K0.4 Ñ3 काश्यप उ°; S (G3 om.) काश्यप:. — $^{c}$) B4 तं प्राह काश्यपं भूय:. — $^{d}$) Ñ2 V1 B (B2 missing) D तक्षक:; S वारयन्.

20 =(var.) 1. 39. 17. — $^{a}$) K3 अर्थं (for धनं). — $^{b}$) K (except K3) Ñ1.2 V1 B (B2 missing) D transp. तस्मात् and राज्ञ:. — $^{c}$) D1 transp. मत्त: and एव. M1.5 स्वं (for त्वं).

21 Before 21, B3 ins. मंत्रिण ऊ°. — $^{a}$) K (except K1) Dn3 एवमुक्त: स (K3 तु). — $^{b}$) M (except M1.5) °पो द्विजसत्तम:. — $21^{cd}$ =(var.) 1. 39. $19^{ef}$; cf. v. l. 20. — $^{c}$) D1 धनं नि°. K3 °त्तं निवृत्तोथ. — $^{d}$) G पन्नगोत्तमात् (for याव°).

22 $^{b}$) Ś1 K1 D5 छद्मनाभ्येत्य (D5 °त्ति). G1.2 तक्षकश्छद्मनागत:. — $^{c}$) Ñ2 V1 B1.3 Da1 Dn2 D1.3.6 G3.6 °श्रेष्ठं.

23 $^{a}$) Ś1 अप्रमादं; K सप्रा(K1.2 °प्र)सादं; T G M1.5 क्षणेनैव (for यत्त°). Ñ1 सप्रसादीयं तमपि; M2–4 स प्रासादस्थितं यत्तं. — $^{b}$) G3 दष्टवान्. — $^{c}$) M (except M1.5) °षश्रेष्ठ. — $^{d}$) D7 G6 M1.5 विषया°; G3 वीर्यवानभि°.

24 $^{a}$) T G (except G1.3) M1.5 एवं. — $^{b}$) Ś1 राजस°; K1 द्विजस°. — $^{c}$) G2.4.5 अस्माकं. G4 अखिलं. D3 T G (except G3) वृत्तं; M (except M1.5) राजन्. — $^{d}$) Ñ2 V1 B (B2 missing) D अतिदा°.

25 $^{a}$) K1.4 D5 चैनं; K3 T G1.4–6 M1.5 चैव; G3 चापि. Ñ1.2 V1 B5 D G3 M4 नरश्रे°. — $^{c}$) Ś1 K1 Dn1 D1 °रुतंक°; D3 S °रुदंक°. D2 उत्तङ्कस्य मुनेश्चैव. — After 25, Da ins. an additional colophon. — K4 Ñ2 B (B2

C. 1. 1997
B. 1. 50. 37
K. 1. 50. 37

जनमेजय उवाच ।
एतत्तु श्रोतुमिच्छामि अटव्यां निर्जने वने ।
संवादं पन्नगेन्द्रस्य काश्यपस्य च यत्तदा ॥ २६
केन दृष्टं श्रुतं चापि भवतां श्रोत्रमागतम् ।
श्रुत्वा चाथ विधास्यामि पन्नगान्तकरीं मतिम् ॥ २७
मन्त्रिण ऊचुः ।
शृणु राजन्यथास्माकं येनैतत्कथितं पुरा ।
समागमं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि ॥ २८
तस्मिन्वृक्षे नरः कश्चिदिन्धनार्थाय पार्थिव ।
विचिन्वन्पूर्वमारूढः शुष्कशाखं वनस्पतिम् ।
अबुध्यमानौ तं तत्र वृक्षस्थं पन्नगद्विजौ ॥ २९
स तु तेनैव वृक्षेण भस्मीभूतोऽभवत्तदा ।
द्विजप्रभावाद्राजेन्द्र जीवितः सवनस्पतिः ॥ ३०
तेन गत्वा नृपश्रेष्ठ नगरेऽस्मिन्निवेदितम् ।
यथावृत्तं तु तत्सर्वं तक्षकस्य द्विजस्य च ॥ ३१
एतत्ते कथितं राजन्यथावृत्तं यथाश्रुतम् ।

---

missing) D ins. after 25: V1 (om. lines 1, 2), after 34ef:

430* सौतिरुवाच ।
एतस्मिन्नेव काले तु स राजा जनमेजयः ।
उवाच मन्त्रिणः सर्वानिदं वाक्यमरिंदमः ।
जनमेजय उवाच ।
अथ तत्कथितं केन यद्वृत्तं तद्वनस्पतौ ।
आश्चर्यभूतं लोकस्य भस्मराशीकृतं तदा ।
यद्वृक्षं जीवयामास काश्यपस्तक्षकेण वै । [5]
नूनं मन्त्रैर्हतविषो न प्रणश्येत काश्यपात् ।
चिन्तयामास पापात्मा मनसा पन्नगाधमः ।
दष्टं यदि मया विप्रः पार्थिवं जीवयिष्यति ।
तक्षकः संहतविषो लोके यास्यति हास्यताम् ।
विचिन्त्यैवं कृता तेन ध्रुवं तुष्टिर्द्विजस्य वै । [10]
भविष्यति ह्युपायेन यस्य दास्यामि यातनाम् ।

[ (L. 1) Da D3.5 सूत उ°. — (L. 3) V1 * * मया हि सत्वेन यमुद्धर्तुं व°. — (L. 7) D5 चिंतयन्बहुरूपा°. K4 B1.3.5 D2.5 पन्नगो बहुधा च सः. — (L. 9) B1.3.5 Da D5 संयत°; D2-4 Nilp संहत°. — (L. 11) Da1 कश्यपस्य (for भवि°). B (B2 missing) Da1 D2-4.7 तस्य; D5 योस्य; D6 तदा. ]

☞ V1 contains both 430* and 431*, but in a confused sequence. The sequence of st. beginning with 25 is as follows: 25, 33, 34abcd, lines 1 and 2 of 431*, 34ef, lines 3-11 of 430*, then 26-32, and finally 35, 36 etc.

26 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 26-32. For V1 cf. v. l. 25 also. — K4 Ñ2 V1 B1.3.4 D (except D6) M3.4 om. जनमेजय उ°. — a) K4 B1.4.5 Da Dn3 D2.5 एवं; Ñ2 B3 Dn1.n2 D1.3.6.7 एकं (for एतत्). — b) Ñ2 V1 Dn D1 तद्वृत्तं; G4-6 ह्यटव्यां. — c) G2 M (M1.5 om.) संवादः. — d) K4 अभवत्; Ñ2 V1 B1.3.5 Da D2-7 च कः; B4 Dn D1 वचः; T2 G1 च यः. Dn D1 तथा.

27 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 27 (cf. v. l. 26). — a) K4 Ñ2 V1 B (B2 missing) D श्रुतवान्दृष्टवान् चा(K4 B1.3.5 वा)पि. — b) Dn कथं; D1 केन (for श्रोत्रं). Ñ2 V1 B (B2 missing) D (except Dn D1) भवत्सु कथमागतं (B1m.3 Da °तः). — c) K4 Ñ2 V1 B (B2 missing) D तस्य; G1 चैव; G6 -पि च; M2.4 चास्य; M3 चाद्य. Ñ2 V1 B4 D (except D2.5) विधास्येहं; M2.4 °धित्सामि.

28 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 28 (cf. v. l. 26). K4 D5 S (G3 M1.5 om.) om. ऊचुः. — b) K4 Ñ2 V1 B (B2 missing) D (except D3) तत् (for एतत्). — c) K4 Ñ2 M (M1.5 om.) °गमः; V1 Da2 Dn °गतं.

29 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 29 (cf. v. l. 26). — a) T2 G2.4-6 वने नरः; T1 वनचरः. — c) D5 सर्वमारूढं (for पूर्व°). — d) K4 D4 शुष्काः शाखाः; Ñ2 V1 Dn D1 °शाखाः; B3.4 D5 शुष्कां शाखां; Da D3.6.7 °शाखां. K4 Ñ2 V1 B (B2 missing) D °स्पतौ. — e) K4 B (B2 missing) Da D2-7 न बुध्येतां तु (D3 च; B1 D5 तं) तौ तत्र; Ñ2 V1 Dn D1 न बुध्येतामुभौ तौ च; T G (G3 om.) °नौ तत्रास्तां. — f) K4 Ñ2 V1 B (B2 missing) D नगस्थं (Da1 गच्छंतौ). Nilp पुरुषद्विजौ.

30 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 30 (cf. v. l. 26). — a) K4 D5 सहसैव तु; Ñ2 V1 B1.4 Da Dn D1.3.4.6.7 सह तेनै°; B3.5 D2 स सहैव तु. — b) K4 B3-5 Da D2 नृपोत्तम; Ñ2 V1 B1 Dn D1.3.4.6.7 °वसुप; D5 द्विजोत्तम. — c) D5 T1 विप्रप्र°. — d) K4 Ñ2 V1 B (B2 missing) D व्यजीवत् (for जीवितः).

31 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 31 (cf. v. l. 26). — a) K4 Ñ2 V1 B (B2 missing) D तेनागम्य; M (M1.5 om.) तेनागत्वा. K4 Ñ2 V1 Dn D1 द्विज°; D3.6.7 T1 G (G3 om.) नर°. — b) K4 पुंसा लोके; Ñ2 V1 B1.3 D पुंसा(D5 पुरा)ख्यासु (B1.3 D2.3 °कं); G1.5

श्रुत्वा तु नृपशार्दूल प्रकुरुष्व यथेप्सितम् ॥ ३२

सूत उवाच ।

मन्त्रिणां तु वचः श्रुत्वा स राजा जनमेजयः ।
पर्यतप्यत दुःखार्तः प्रत्यपिंषत्करे करम् ॥ ३३
निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः ।
मुमोचाश्रूणि च तदा नेत्राभ्यां प्रततं नृपः ।
उवाच च महीपालो दुःखशोकसमन्वितः ॥ ३४
श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति ।
निश्चितेयं मम मतिर्या वै तां मे निबोधत ॥ ३५
अनन्तरमहं मन्ये तक्षकाय दुरात्मने ।
प्रतिकर्तव्यमित्येव येन मे हिंसितः पिता ॥ ३६
ऋषेर्हि शृङ्गिणो वचनं कृत्वा दग्ध्वा च पार्थिवम् ।
यदि गच्छेदसौ पापो ननु जीवेत्पिता मम ॥ ३७
परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः ।
काश्यपस्य प्रसादेन मन्त्रिणां सुनयेन च ॥ ३८
स तु वारितवान्मोहात्काश्यपं द्विजसत्तमम् ।

C. 1. 2012
B. 1. 50. 52
K. 1. 50. 52

---

गुरवेस्मिन्. — $^{c}$) K4 B1.3.5 D2.5 G1 च (for तु). — $^{d}$) M3 पन्नगस्य द्वि°.

32 Ś1 K (except K4) Ñ1.3 G3 M1.5 om. 32 (cf. v. l. 26). — $^{a}$) G1.2.4.5 सर्वं (for राजन्). — $^{b}$) K4 Ñ2 V1 B (B2 missing) D यथादृष्टं श्रुतं च (D5 तु) यत् (D3.6.7 तत्). — $^{c}$) K4 Ñ2 V1 B (B2 missing) D (except D5) G6 च (for तु). G2.4.5 नर°; G6 कुरु°. — $^{d}$) K4 Ñ2 V1 B (B2 missing) D विधत्स्व यदनंतरं (D1 यदभीप्सितं); T1 °स्व यथामति (cf. 25$^{d}$).

33 D5 T1 M1.5 om. सूत उ°. Ś1 K1 D3 T2 G M2–4 सूतः; K0.3.4 Ñ1.2 V1 B1 Dn3 D1 सौतिरु°. — $^{a}$) K3.4 D3 च; M1.5 तत् (for तु). G M2–4 °णां वचनं. — $^{d}$) Ś1 K2.3 D2 प्रत्यपीपत्; K4 पर्यपी°; Ñ1 B5 G3 पर्यपिं°; Ñ3 प्रतिपी°; B4 प्रत्यर्पय (m as in text); D5 °पिष्य; D6 T1 °पीडत्; T2 G6 °पिंक्षत्; G1.2.4.5 M2.4 पर्यपिंक्षत्; M1 °विक्षत्; M5 °पिक्षत्. Ñ1.2 V1 B1.3 D (except D1.5) transp. करे and करं.

34 $^{a}$) T G1.2 M (except M1.5) निःश्वसन्; G4–6 निःश्वासन्. D3 विनिश्वसन्नुष्ण स°. K3 उत्सृज्य (for असकृत्). — $^{b}$) Ñ1 दीप्तः (for दीर्घं). — $^{c}$) Ś1 K1 Ñ3 D1.2.5 G6 transp. अश्रूणि and च. D6 स (for च). Ś1 K1 तथा; K2.4 ततः (for तदा). B4 सहसा; G1 M (except M1.5) नेत्राभ्यां (for च तदा). — $^{d}$) Ñ1.3 D2 नेत्रयोः. K0 Ñ1 सततं; K2.4 सं°; K3 T G2.3.5.6 प्रापतत्; Ñ2 V1 B (B2 missing) Da Dn D4 M1.5 °रुदन्; Ñ3 प्रापतं; D1.3.6.7 G4 प्रारुदत्; D2 पतितः; D5 प्रीतितः. K3 जलं; B1 इव; D1 तदा (for नृपः). G1 M2–4 प्रापतच्च नृपस्तदा. — $^{e}$) G3 जनमेजयो मही°. B1 M (except M1.5) स (for च). — $^{f}$) = (var.) 1. 42. 1$^{b}$. — K4 Ñ2 Dn D1.2.4 ins. after 34$^{ef}$: V1 (om. line 3), after 34$^{cd}$:

431* दुर्धरं बाष्पमुत्सृज्य स्पृष्ट्वा चापो यथाविधि ।
मुहूर्तमिव च ध्यात्वा निश्चित्य मनसा नृपः ।
अमर्षी मन्त्रिणः सर्वानिदं वचनमब्रवीत् ।

[ (L. 1) K4 D2 सस्वरं वाक्यमु°. K4 पन्नगया चापो यथागतं. ❀ Nil: दुर्धरमित्यादिः सार्धः श्लोकः क्षिप्त इति भाति । ❀ ]

35 Before 35, K4 Ñ2 V1 B3 Dn D1.2.4.6 G2.3 ins. जनमेजय उ°. — $^{a}$) Ś1 K1 तु; D3.6.7 एव; D5 एवं (for एतत्). — $^{b}$) D2.5 G1 M (except M1.5) पितुः स्वर्गगतिं. — $^{c}$) T1 G1.6 निश्चितेयं (T1 °ता च) मतिर्या वै. — $^{d}$) Ñ2 V1 B (B2 missing) Da Dn D1–4.6.7 M1.5 च (for वै). B3–5 Da1 D2.3.7 एतां; D6 M1.5 एनां (for तां). K (except K1) यादृशी तां; D5 अमात्या वै; M2–4 तां मे यूयं (for या वै तां मे). T1 G1.6 तां निबोधत सत्तमाः.

36 $^{a}$) Ñ1.2 V1 B (B2 missing) D (except D5) °रं च मन्येहं. — $^{b}$) Ś1 Ñ3 D6.7 महात्मने. D1 G1 तक्षकस्य दुरात्मनः. — $^{c}$) Ñ V1 B (B2 missing) D (except D5) T2 M2.4 एवं. — $^{d}$) = (var.) 1. 3. 185.

37 $^{a}$) K3 ऋषिः शृंगीस्तु वच°; Ñ1 B (B2 missing) Da D2–4.6.7 °र्हि शृंगिणो वाक्यं; Ñ2 V1 Dn D1 शृंगिणं हेतुमात्रं यः; G2 °र्हि वचनं शृंगेः. — $^{b}$) T1 श्रुत्वा; G2 दृष्ट्वा (for कृ°). K2 G5 दृष्ट्वा; T2 G1.4.6 दग्ध्वा; G2 कृत्वा. M1.5 °त्वा संदह्य पा°. — Ñ2.3 V1 B (B2 missing) Dn D1.2.4.6.7 ins. after 37$^{ab}$: K4 Da D3, after 37$^{cd}$:

432* इयं दुरात्मता तस्य काश्यपं यो न्यवर्तयत् ।

D5 om. 37$^{c}$–38$^{b}$. After 432*, D3 repeats 37$^{cd}$ with the reading of the vulgate (see below). — $^{c}$) K4 Da विप्रः (for पापः). Ñ (Ñ3 *sup. lin.*) V1 B (B2 missing) Dn D1.2.3 (second time).4.6.7 यद्यागच्छेत् स वै (D2 असौ) विप्रः.

38 D5 M3 om. 38$^{ab}$ (cf. v. l. 37). — $^{b}$) M2.4 °वेत्पिता मम. — $^{c}$) Ñ1.3 S प्र(G3 नि)योगेण (G3 °न). — $^{d}$) Ñ2 V1 B4.5 Da2 Dn D3.4.6.7 विनये°; Da1 D1 विजये°. D3.7 वा (for च).

39 $^{a}$) T G3.6 M1 च (for तु). — $^{b}$) K4 मुनिस°. — $^{c}$) T2 G3.6 M1.5 स (M1.5 तं) संजीवयितुं. B4 m

C. 1. 2012
B. 1. 50. 52
K. 1. 50. 52

संजिजीवयिषुं प्राप्तं राजानमपराजितम् ॥ ३९
महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः ।
द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति ॥ ४०
उत्तङ्कस्य प्रियं कुर्वन्नात्मनश्च महत्प्रियम् ।
भवतां चैव सर्वेषां यास्याम्यपचितिं पितुः ॥ ४१

इति श्रीमहाभारते आदिपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## ४७

सूत उवाच ।
एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमोदितः ।
आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः ।
ब्रह्मन्भरतशार्दूलो राजा पारिक्षितस्तदा ॥ १
पुरोहितमथाहूय ऋत्विजं वसुधाधिपः ।
अब्रवीद्वाक्यसंपन्नः संपदर्थकरं वचः ॥ २
यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान् ।
प्रतिकुर्यां यथा तस्य तद्भवन्तो ब्रुवन्तु मे ॥ ३
अपि तत्कर्म विदितं भवतां येन पन्नगम् ।
तक्षकं संप्रदीप्तेऽग्नौ प्राप्स्येऽहं सहबान्धवम् ॥ ४
यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना ।
तथाहमपि तं पापं दग्धुमिच्छामि पन्नगम् ॥ ५

---

विप्रं (for प्राप्तं).

40 Dn3 transp. 40 and 41. — a) D5 °तिशयो; M1.5 महागति°. G6 ह्यस्य. — b) Ś1 K1 G5 महात्म°. — c) T G6 M1.5 काश्यपस्य (T1 °स्या-) दद(T2 G6 °दा)त्; G3 काश्यपस्य ददौ. Ś1 K (except K3) G1.4.5 [ऽ] ददात्; M2–4 ददौ. Ko.2.4 B1 D5 वित्तं (for द्रव्यं). — d) G3 नृपतिं; M3 मा मृतं. T G6 M1.5 न (for मा). Ś1 K1 °येति च.

41 Dn3 transp. 40 and 41. — a) Ś1 K1 उत्तं°; S उदं°; cf. v. l. 1. 3. 86, 87 etc. Ñ1.2 V1 B (B2 missing) D (except D5) °यं कर्तुं. — b) G2 मनःप्रि°; M5 कचित्प्रि°. — d) Ñ2 V1 D (except D2.4.5) गच्छाम्य°. — After 41, K4 ins.:

433* सर्पसत्रं विधास्यामि नागानां क्षयकारकम् ।

Colophon. *Sub-parvan:* All MSS. (except T2) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* K (except K1) जनमेजयवाक्यं; G3 सर्पसत्रप्रतिज्ञा. — *Adhy. no.* (figures, words or both): Ś1 K1 59; Ko 45; K3 (*sup. lin. sec. m.*) T 43; Ñ1.2 V1 Dn3 50; Da1 49; D4 marg. 48; D5 16; G M 33 (G2 35; G3.6 M3 34). — *S'loka no.:* Da1 (reckoning from st. 26, where an additional colophon is ins.; cf. v. l. 25 above) 24; Dn 53. — *Aggregate s'loka no.:* Dn3 1988.

## 47

1 In Ś1, the portion from सूत उ° to मन्त्रिभिः (in a) is lost on the missing upper half of a fol. (35b). — Ko.3 B1 Dn D1 सौतिरु°; K1 S (G3 om.) सूतः. — a) D2 द्विजः (for ततः). — c) M1.5 ततोकरोत् (for आरु°). Ñ1.3 G6 वै (for स). — d) T1 सर्पराजाय(!). — e) K3 ब्रह्मर्षे नृपशा°. — f) A few N MSS. and most S पारी° (for पारि°); cf. v. l. 1. 1. 8; 36. 8 etc.

2 b) K Ñ1.3 B3 T G3 M सर्त्विजं; Ñ2 V1 Dn D2.3.5 °जः G2.4.5 सर्त्विजः स नराधिपः. — d) K3 तद्यदर्थं°; Ñ3 V1 B (B2 missing) D कार्यसंपरक° (D2 सम्यगर्थं°); G1.6 संपन्नार्थं°; G3 स्वयमर्थं°.

3 Before 3, Ko.4 B3 D4 G3.6 M (except M1.5) ins. जनमेजय उ°. — a) Ś1 K1 Ñ3 यो नः; B (B2 missing) D2.4 योसौ. Ko.2 (m as in text).4 येन नो हिंसितस्तातः (K4 °त). — b) Da D5 G (except G3.5) सु- (for स). M1.5 तक्षकस्य दुरात्मनः. — c) T2 प्रतिक्रियां. Ñ3 अहं; B3 Dn (except Dn3) D1.4.5.7 तथा. G1 सद्यः (for तस्य). D3.6 °यां तक्षकस्य. — d) Ś1 K1 transp. तत् and भवन्तः. K3 मां (for मे).

4 b) Ś1 पतितं ये°. — c) T G1.3.6 °दीप्ताग्नौ. — d) Ko.2.4 Ñ1.2 V1 B (B2 missing) D G3 M2–4 प्रक्षिपेयं सबां°; K1 T G1.2.4.5 प्रापयेयं सबांधवं (T1 °वैः); K3 प्रदहेयं सबां°; Ñ3 प्राप्स्येयं वै सबां°; G6 M1.5 प्राप्स्येयं सह बांधवैः.

5 ab) Ko यथास्माकं. K2.4 B4 D5 पितास्माकं; Ñ1 °ता मे तु. M1.5 transp. मह्यं and पूर्वं. K1 T2 G1.2 पूर्व-. — c) M1.5 नागं (for पापं).

6 G5 om. ऋत्विज ऊ°. Ś1 K1 T G1.2.4.6 M1.3.5 ऋत्विजः; Ñ1 ऋत्विगुवाच; Ñ2 V1 M2.4 ऋषिः; G3 ब्राह्मणाः. — a) D1.2.5 T2 G1.6 महाप्र°. — b) B4 G6 तद्धं. B1.4.5 D3 दैवनि°; G3 परिनि°. — M1.5 om. 6c–7b.

ऋत्विज ऊचुः ।

अस्ति राजन्महत्सत्रं त्वदर्थं देवनिर्मितम् ।
सर्पसत्रमिति ख्यातं पुराणे कथ्यते नृप ॥ ६
आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ।
इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः ॥ ७

सूत उवाच ।

एवमुक्तः स राजर्षिर्मेने सर्पं हि तक्षकम् ।
हुताशनमुखं दीप्तं प्रविष्टमिति सत्तम ॥ ८
ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा ।
आहरिष्यामि तत्सत्रं संभाराः संभ्रियन्तु मे ॥ ९
ततस्ते ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम ।
देशं तं मापयामासुर्यज्ञायतनकारणात् ।
यथावज्ज्ञानविदुषः सर्वे बुद्ध्या परं गताः ॥ १०
ऋद्ध्या परमया युक्तमिष्टं द्विजगणायुतम् ।
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिवेशितम् ॥ ११
निर्माय चापि विधिवद्यज्ञायतनमीप्सितम् ।
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ॥ १२
इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति ।
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा ॥ १३
यज्ञस्यायतने तस्मिन्क्रियमाणे वचोऽब्रवीत् ।
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः ॥ १४
इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा ।
यस्मिन्देशे च काले च मापनेयं प्रवर्तिता ।
ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः ॥ १५ C. 1. 2030 B. 1. 51. 16 K. 1. 51. 16

— d) T2 G2–5 पुराणं; G6 °णैः. Ñ V1 B D °णे परिपठ्यते.

7 M1.5 om. 7ab (cf. v. l. 6). — a) G3 सर्पस°; M (M1.5 om.) तस्य यज्ञस्य. — b) D5 त्वत्तो नान्यो. K Ñ3 G1 M (M1.5 om.) जनाधि°; Da D1.6.7 °धिपः. — M4 om. from प्राहुर° up to end of 8.

8 M4 om. 8 (cf. v. l. 7). K3 Ñ1.2 Dn G2–5 om. सूत उ°. Ś1 K1 T G1.6 M (M4 om.) सूतः; Ko.4 B1.4 D1 सौतिरु°. — a) S (except G1; M4 om.) राजेंद्रः. — b) K4 Ñ2 V1 B (B2 missing) D (except D5) दग्धं (for सर्पं). — c) Ñ V1 B (B2 missing) D (except D5) मुखे दीप्ते. — d) B1.3 (m as in text).4.5 D2.5 G1 इव; T G2–6 M1.5 द्विज- (for इति). K2 D2.5 सत्तमः. M2.3 प्रविष्टं सह बंधुभिः.

9 a) T2 G4–6 ब्रह्मविदः. T1 G3 ततो ब्रह्मविदः सर्वान् (G3 तांस्तान्); G2 °वीन्मंत्रवित्तान्. — b) D5 G1.6 कर्मज्ञान्; G3 स राजा. T1 प्राह राजा महीपतिः. — c) D3.6.7 अहं (for तत्). — d) K3 D4 T संभारान्. Ś1 संभवंतु; Ko.2.3 G4 °भरंतु. K2.3 च; G5 वै; M1.5 नः.

10 Before 10, S (except G2.6) ins. सूतः. — a) Ñ V1 B1.3 M (except M1.5) ततस्त; Da ततस्तु; T ततो हि. M1.5 चर्त्विज°. — b) D5 निर्दिष्टाः; G1.6 शास्त्रेण; M (except M1.5) °ज्ञाः. K3 Ñ1 Da1 D5 M (except M1.5) °सत्तमाः. — c) Ñ V1 B (B2 missing) D (except D3.6.7) transp. देशं and तं. K2 कार°; D5 याप°; G1.6 प्राप°; G2 ताप°; G3 ज्ञाप°. — d) K3 °कारिणः; D6 °कांक्षणात्. — e) Ko.3 Ñ1 यथा च. Ś1 K1 Ñ3 ज्ञानविद्वांसः; Ñ1 तज्ज्ञा विद्वांस (sic); Ñ2 V1 B (B2 missing) D वेदविद्वांसः; G1 ज्ञानविद्याश्च. G2.4.5 यथा यज्ञविदः; G3 M1.3.5 यथा विज्ञान°; G6 यथा विज्ञानविद्वांसः. — f) K3.4 Ñ2 V1 B (B2 missing) D (except D5) M (except M1.5) बुद्धेः. D6 बुद्ध्या परंतपाः; T2 G6 °द्धिं परां ग°; G3 °द्धिमतां वराः.

11 a) Ś1 इष्ट्या; Ñ3 धृत्या; G3 वेद्या (for ऋद्ध्या). — b) Ś1 Ko.1.3 G1 इष्ट-; K2 इष्टैर्; K4 शिष्ट-. Ko D2 °गुणान्वितं; K1 Ñ1.2 V1 B5 °गणावृ°; K2 °गणैर्युतः; K3 °जनावृ°; Ñ3 G6 M2–4 °जनायु°; B1.3 D5 T G2.4.5 °गणान्वि°; Dn D4 °गणैर्यु°; D1 देवगणैर्यु°. — c) Ñ3 D5 °धान्यं च; D3.6.7 °रत्नाढ्यं. — d) T1 G1 M3 (*inf. lin.* as in text) ऋत्विजः. Ś1 K1 संनिवेष्टितं; Ñ1.2 V1 B5 D (except D2.4.5) °पेत्रितं; B3 G2.4–6 °वेदि°; B4 °वेष्टि°; G3 संनिवे°.

12 a) G3 सर्वं (for चापि). — In Ś1, the portion from 12b up to 1. 48. 3 is lost on the missing upper half of a fol. (36). — b) S (except G1) °नमुत्तमं. — d) D5 °त्राय वे; T2 G3.6 °त्राय वै. T2 G3.6 M1.5 द्विजाः (for तदा). T1 °सत्राय चर्त्विजः.

13 Ś1 missing. — a) M (except M1.5) om. च. K3 तदा पूर्वमिदं चासीत्. — M5 om. 13b. — c) M5 °दुल्बणं. — d) T2 महत् (for तदा).

14 Ś1 missing. G5 om. 14a–15b. — a) K1 °स्यावसरे. — b) K1 °णेथ सोथ°. — c) G1 प्रवृत्तेर्बुद्धि°.

15 Ś1 missing. G5 om. 15ab (cf. v. l. 14). — a) K3 °वीद्वार्धुकिकः. — b) K1.2 T G2 तथा. — c) B5 transp. देशे and काले. — d) G1.2.4.5 M2 (*inf. lin.* as in text).4 स्थापनेयं; G3 रूपनीयं. T1 G3.6 प्रकीर्ति°. — f) Ko.1 Ñ3 S °स्थाप्यते (T1 °स्थापये;

C. 1. 2031
B. 1. 51. 17
K. 1. 51. 17

एतच्छ्रुत्वा तु राजा स प्राग्दीक्षाकालमब्रवीत् ।
क्षत्तारं नेह मे कश्चिदज्ञातः प्रविशेदिति ॥ १६
ततः कर्म प्रववृते सर्पसत्रे विधानतः ।
पर्यक्रामंश्च विधिवत्स्वे स्वे कर्मणि याजकाः ॥ १७
परिधाय कृष्णवासांसि धूमसंरक्तलोचनाः ।
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ॥ १८
कम्पयन्तश्च सर्वेषामुरगाणां मनांसि ते ।
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा ॥ १९
ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने ।
विवेष्टमानाः कृपणा आह्वयन्तः परस्परम् ॥ २०
विस्फुरन्तः श्वसन्तश्च वेष्टयन्तस्तथा परे ।
पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ॥ २१
श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा ।
रुवन्तो भैरवान्नादान्पेतुर्दीप्ते विभावसौ ॥ २२
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अवशानि विनष्टानि पन्नगानां द्विजोत्तम ॥ २३
इन्दुरा इव तत्रान्ये हस्तिहस्ता इवापरे ।
मत्ता इव च मातङ्गा महाकाया महाबलाः ॥ २४

---

G3 as in text); K3 °स्थायते; B4.6 °ति.

16 Ś1 missing. Before 16, B3 ins. सौतिरु°. — $^{a}$) K1 Ñ1.2 V1 च; T1 M4 स (for तु). K0.2.4 प्राक्; Ñ2 V1 B (B2 missing) D M4 असौ (D1 तु); T च (for स). M1–3.5 °त्वा स राजेंद्रः. — $^{b}$) K (except K1) दीक्षा(K3 प्राप्त)कालमथाब्र°; M1.5 °काल अब्र°; M2–4 °क्षाया वचोब्र°. — $^{c}$) G1 अंतरा; G2 कर्तारं. K2 Ñ1.2 V1 D (except D2.5) न हि; K3 जह्नि. — $^{d}$) D5 अविज्ञातो विशे°. K1 T1 °शेदिह. — After 16, K0.4 Ñ2 B (B2 missing) D (except D5) ins. an additional colophon.

17 Ś1 missing. Before 17, K0.4 Ñ2 V1 B (B2 missing) D ins. सौतिरु° (D3.5 सूत उ°); cf. v. l. 16. — $^{a}$) Ñ3 transp. कर्म and प्रववृते. — $^{b}$) Ñ2 Dn D1–3 T1 °सत्र-; M1.5 °सत्रं. — $^{c}$) K1.2 B1 D6 M3 पर्या(B1 °र्यं)क्र(K1 °क्रा)मंश्च. — $^{d}$) K0.2 याज्ञिकाः; G3 योजिताः.

18 Ś1 missing. — $^{a}$) Hypermetric! K0.2 विधाय; K1 विविधाय; K3.4 पिधाय; Ñ2 V1 B (B2 missing) D प्रा(D1 आ)वृत्य. — $^{b}$) Dn D5 धूम्र°. — $^{c}$) G2.4.5 मंत्रतश्चैव. — $^{d}$) K1 समृद्धां; K3 M1.5 °मृद्धं; K4 M2–4 °मिद्धे. M (except M1.5) °वेदसि.

19 Ś1 missing. — $^{a}$) T2 G6 M1.5 °यंति. B3 तु; T G6 M1.5 स (for च). — $^{b}$) B4.5 पन्नगानां म°. D6 मनस्विनां. K3.4 Ñ1.2 V1 B (B2 missing) Da Dn D1–4.7 T1 G5 M4 च; D5 M1.5 वै (for ते). — $^{c}$) K1.4 B3–5 D2 T1 सर्वाना°; K3 सर्वांश्चा°. D5 सत्रे (for तत्र). K2 ते सर्वान् जुहुयास्तत्र. — $^{d}$) K Ñ3 B (B2 missing) Da1 D2 T1 G2.3.6 सर्पानग्नि°.

20 Ś1 missing. — $^{a}$) G2.4.5 ततः (for सर्पाः). After 20$^{a}$, there begins in K1 a big lacuna, which reaches up to 1. 54. 4, the fol. being left blank. — $^{b}$) G2.4.5 समिद्धे (for प्र°). M1.2 (before corr.).5 °प्ते जातवेदसि (cf. v. l. 18). — $^{c}$) K (except K0.1) Ñ V1 B (B2 missing) D विचेष्ट°. Ñ V1 B (B2 missing) D (except D2.5) M3 °पणं.

21 Ś1 K1 missing. — $^{a}$) K0 निःश्वसंतः; G1 स्फुरंतश्च; G3 निरंतरं. K0 Da1 G2 स्फुरंतः; G1 स्वरंतः. — $^{b}$) K3.4 B5 D1.3 चेष्ट°. K2 तथारुचिः; Ñ2 V1 B (B2 missing) D परस्परं. — K2 om. 21$^{c}$–22$^{b}$. — $^{c}$) G1 भोगैः शि°. T2 G6 पुच्छैश्चैव शि°; G2.3 पुच्छैः श्वेतशि°. T2 G2.3.6 om. भृशं. B5 सु- (for च).

22 Ś1 K1 missing. K2 om. 22$^{ab}$ (cf. v. l. 21). — $^{a}$) K3 पीताः (for श्वेताः). T1 transp. कृष्णाः and नीलाः. D3.4 T2 G (except G3) M (except M1.5) रक्ताः (for नीलाः). — $^{b}$) M1.5 शिशवोशिश°. — $^{c}$) Ñ V1 T1 G रवंतो; B (B2 missing) D T2 नदं(D2 °दं)तो. B (B2 missing) D विविधान्; T G3.6 M1.5 भैरवं. K3 Ñ1 D2 G2.4.5 रावान्; T1 M1.5 रावं; T2 G3.6 नादं; G1 रम्यान्. — $^{d}$) M1.5 प्रदीप्ते च वि°. G1 °प्ते हुताशने. — After 22, Dn D3.4 (marg. *sec. m.*; om. line 2).5 T G (except G3) M (except M1.5) ins.:

434* क्रोशयोजनमात्रा हि गोकर्णस्य प्रमाणतः ।
पतन्त्यजस्रं वेगेन चाग्नावग्निमतां वर ।
[ (L. 2) Dn °न वह्नावग्नि°. ]

23 Ś1 K1 missing. — $^{a}$) Ñ1 असुख्यानां (for अव°). D1 G3.6 निवि°; T G1 M प्रवि° (for विन°). K0.3 अवशानां प्रवि° (K0 विन°); K2.4 असंख्यातानि नष्टा°; G2.4.5 अग्नावेतानि नष्टा°. — $^{d}$) Ñ2 D (except D2) तु तत्र वै (for द्विजो°). T G3.6 M1.5 नागानां द्विजसत्तम.

24 Ś1 K1 missing. — $^{a}$) K0.2.4 उरगाः; K3 इदंकाः; Ñ V1 B (B2 missing) D तुर(B4 D3 °रं)गाः; T G1.2.4.5 M2.3 (*inf. lin.* as in text).4 दर्दु(T2 °र्दुं)राः; G3 असुराः (for इन्दुराः as in G6 M1.5). — $^{b}$) K2.3 तथापरे. — $^{c}$) K2 D3.6.7 सु(K2 प्र)मत्ता इव मा°.

25 Ś1 K1 missing. — $^{a}$) K2 °बन्धश्च बहुशः.

उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः ।
घोराश्च परिघप्रख्या दन्दशूका महाबलाः ।
प्रपेतुरग्नावुरगा मातृवाग्दण्डपीडिताः ॥ २५

इति श्रीमहाभारते आदिपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## ४८

शौनक उवाच ।
सर्पसत्रे तदा राज्ञः पाण्डवेयस्य धीमतः ।
जनमेजयस्य के त्वासन्नृत्विजः परमर्षयः ॥ १
के सदस्या बभूवुश्च सर्पसत्रे सुदारुणे ।
विषादजननेऽत्यर्थं पन्नगानां महाभये ॥ २
सर्वं विस्तरतस्तात भवाञ्शंसितुमर्हति ।
सर्पसत्रविधानज्ञा विज्ञेयास्ते हि सूतज ॥ ३

सूत उवाच ।
हन्त ते कथयिष्यामि नामानीह मनीषिणाम् ।
ये ऋत्विजः सदस्याश्च तस्यासन्नृपतेस्तदा ॥ ४
तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः ।
च्यवनस्यान्वये जातः ख्यातो वेदविदां वरः ॥ ५
उद्गाता ब्राह्मणो वृद्धो विद्वान्कौत्सार्यजैमिनिः ।
ब्रह्माभवच्छार्ङ्गरवो अध्वर्युर्बोधपिङ्गलः ॥ ६

C. 1. 2046
B. 1. 53. 6
K. 1. 53. 6

— [b]) G1 नानारूप-. Ñ1 विषोद्धताः; G1.2 M2 °द्गुणाः. — [d]) = 1. 18. 11[b]. — [e]) K2 पेतुरग्रा तुवुरुगाः (sic). — [f]) K2 मातुः शापनिपी°; K3 °शापाभिपी°; Ñ3 मातृदंडनिपी°; T2 G3 मंत्रवाग्दंड°.

Colophon. Ś1 K1. missing. — *Sub-parvan:* All MSS. (except Dn T2; Ś1 K1 missing) आस्तीक (v. l. आस्तिक, अस्तीक). — *Adhy. name:* Ko.2.4 सर्पसत्रप्र(K2 om. प्र)वर्तनं; Ñ1.2 V1 सर्पसत्रोपक्रमः; Dn1.n2 D1 सर्पसत्रं. — *Adhy. no.* (figures, words or both): Ko 47; K3 (*sup. lin. sec. m.*) T 44; Ñ1.2 V1 52; B1 51; D3.4 (marg.) 50; D5 17; G M 34 (G2 36; G3.6 M3 35). — *S'loka no.:* Da1 Dn (reckoning from st. 17, where an additional colophon is ins.; cf. v. l. 16 above) 10.

**48**

1 This adhy. is missing in K1, which has a lacuna here (cf. v. l. 1. 47. 20). In Ś1, st. 1–3 are lost on the missing upper half of a fol. (36); cf. v. l. 1. 47. 12. K3 श्रीशौनक उ°; D3 ऋपय ऊ°; D6 S शौनकः. — [a]) K4 G3.6 महाराज्ञः; T महाप्राज्ञः; M1.5 महायज्ञे. — [b]) D7 पांडवस्य च धी°. — [d]) Ñ3 पुरुपर्षभाः.

2 Ś1 K1 missing. — [a]) D2 तु (for च). — [b]) Ko.2.4 Ñ1.3 तत्र सत्रे; K3 सत्रे तत्र; G6 तस्य स°. — [d]) Ñ3 D3.5–7 भयावहे; G3 महामते.

3 Ś1 K1 missing. — [a]) Ñ1.2 V1 B (B2 missing) Da Dn D1.3 विस्तरशः; D5 G2 °स्तार°; G1 °स्तरितं. — [b]) G1 व्याहर्तुं; G2.4.5 M (except M1.5) व्याख्यातुं (for शंसि°). Ko Ñ3 D1.6.7 T1 G1.2 अर्हसि. — [c]) B4 Dn M4 °नज्ञ. — [d]) K3 Ñ1 T G3–6 M (except M3) तेपि; Ñ2 V1 Dn D1 के च; B (B2 missing) Da D2–4.6.7 के हि; D5 G1.2 तव. K3 तत्वतः; D6 सत्तम.

4 K1 missing. Ś1 resumes with मनीषिणां (in[b]); cf. v. l. 1. 47. 12. Ko.3.4 B1.4 Dn D1 सौतिरु°; S सूतः. — [a]) K3 अथ; T2 G अहं. Ñ3 वर्तयि°. — [c]) A few MSS. make the abhinihita saṁdhi. G2 ऋत्विजश्च सद°. — [d]) K (K1 missing) तत्रास°.

5 K1 missing. — [cd]) G3 तस्यैव चान्वये जातं. Ñ V1 B1.3.4 D (except D2.3.5–7) G1 transp. जातः and ख्यातः. Ñ3 वेदविशारदः.

6 K1 missing. — [b]) Ś1 Ñ1 V1 B5 Dn D1–7 G1.2.4.5 कौत्सोथ; Ko.2 Da1 °त्सेय-; K3 °त्सः स; K4 °शल्य-; Ñ3 °त्सेर्य-; B4 °स्यश्च; T G3.6 M कौ(G3 कु)त्सस्तु. — [cd]) G2 °भवच्चांगिरसः. Ś1 Ko.2.4 °वो[ऽ]ध्वर्युर्वोढाधि-(Ś1 °थ)पिंगलः; K3 Ñ V1 M1.2.4.5 °वो[ऽ]थाध्वर्युर्बोधि° (M2.4 °ध°); B (B2 missing) D °वो अ(D2 ह्य)ध्वर्युश्चापि पिं° (D5 °वो[ऽ]प्यध्वर्जुर्हेमपिं°); T G3.4.6 M3 °वो ह्य(G4 °था)ध्वर्यु°. — After 6, K4 D5 ins.:

435* उत्तङ्को ह्यभवत्तत्र नेता च ब्राह्मणोत्तमः ।
कुण्डलद्वेषतस्तत्र सर्पान्दहति सर्वतः ।

7 K1 missing. Dn1 om. 7. — [a]) T1 transp. पुत्र and शिष्य. M1.5 °शिष्यैः. T G3.5.6 M1.5 °समन्वितः; G2.4 °समावृतः. D5 वैशंपायनसहा°. — After 7[ab], B5 reads 9[cd]. — [c]) K3 शमीकश्च; Ñ2 V1 Dn (Dn1 om.)

C. 1. 2047
B. 1. 53. 7
K. 1. 53. 7

सदस्यश्चाभवद्व्यासः पुत्रशिष्यसहायवान् ।
उद्दालकः शमठकः श्वेतकेतुश्च पञ्चमः ॥ ७
असितो देवलश्चैव नारदः पर्वतस्तथा ।
आत्रेयः कुण्डजठरो द्विजः कुटिघटस्तथा ॥ ८
वात्स्यः श्रुतश्रवा वृद्धस्तपःस्वाध्यायशीलवान् ।
कहोडो देवशर्मा च मौद्गल्यः शमसौभरः* ॥ ९
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।
सदस्या अभवंस्तत्र सत्रे पारिक्षितस्य ह ॥ १०
जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ ।
अहयः प्रापतंस्तत्र घोराः प्राणिभयावहाः ॥ ११
वसामेदोवहाः कुल्या नागानां संप्रवर्तिताः ।
ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥ १२
पततां चैव नागानां धिष्ठितानां तथाम्बरे ।
अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशम् ॥ १३
तक्षकस्तु स नागेन्द्रः पुरंदरनिवेशनम् ।
गतः श्रुत्वैव राजानं दीक्षितं जनमेजयम् ॥ १४
ततः सर्वं यथावृत्तमाख्याय भुजगोत्तमः ।
अगच्छच्छरणं भीत आगस्कृत्वा पुरंदरम् ॥ १५
तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक ।
भयं नागेन्द्र तस्माद्वै सर्पसत्रात्कथंचन ॥ १६

---

D4 प्रमतकः; Ñ3 G1.6 M2-4 क(G6 का)मठ°; B (B2 missing) Da D1-3.6.7 प्रम(Da1 °प)ठ(D2 °थ)कः (D1 °नः); D5 मवर°; T G2-5 M1.5 शमध(T G3 °प)रः. — d) D3.6.7 श्वेतघेतुश्च. T1 तु (for च). Ñ3 V1 B (B2 missing) Da Dn (Dn1 om.) D1-4.6.7 पिंगलः; D5 T2 G1.6 M2 शांडिलः (T2 °लिः; also *inf. lin.* पंचमः as in text).

8 K1 missing. — B3 om. 8$^{cd}$. — c) Ś1 transp. 8$^{c}$ and 9$^{a}$. K3 कुंडधारोथ; Ñ V1 Dn D1.3.6.7 °जठरौ; D5 T1 G1.6 M कण्व(G1 कर्ण; M1.5 कंड)जठरौ; T2 G2-5 कण्वज°. — d) K2.4 कुट्टि°; K3 कर्का°; Ñ1 °घटि°; Ñ2 V1 B1.4.5 D कालघट° (Da1 °वर°); Ñ3 °घटा°; T1 कट°; T2 G1 M3 कटि°; G2 करिकट°; G3 द्विज°; G4.5 कटिघटि°; G6 किरिकट°; M1.5 कटिकट°.

9 K1 missing. — a) Ś1 transp. 9$^{a}$ and 8$^{c}$. — b) Ś1 Ñ V1 B (B2 missing) Da2 D2.6.7 वयःस्वा°; Dn D1.4 जपस्वा°. — B5 reads 9$^{cd}$ after 7$^{ab}$. — c) Ś1 कोहडो; K0 कोहाडा; K3.4 Da1 D3.5 T2 G1.3.4 M1.3.5 °हलो; Ñ V1 B (B2 missing) Da2 Dn D1.2.4.6.7 G2.5.6 M2.4 कोहलो; T1 कहेलो. — d) K4 मौद्गलः; G5 मुद्गलः. Ś1 K4 D5 च स सौरभः; K0.2 च स सौभ°; K3 चैव सौभरिः; Ñ V1 B (B2 missing) Da Dn D1-4.6.7 समसौरभः (Dn2 समसौभरः); T1 शमंदो हरः; T2 G2.4.5 °ठो हरः; G1 °ठो रहः; G3 °लो नरः; G6 °ठोरगः; M1.5 °ठो नरः; M2.4 °ठो रभः; M3 °ठो भरः.

10 K1 missing. — b) Ś1 संश्रित°; K (K1 missing) T1 शंसित°; Ñ2 V1 B (B2 missing) D M1.5 वेदपारगाः. — c) K3 Ñ V1 B (B2 missing) Da Dn D2.4-7 चाभवं°; D3 T1 G1.2.4.5 M5 स्वभवं°; T2 स्म भवं°; G3 तेभवं°. D1 सदस्याश्चाभवंश्चान्ये. — d) Ñ3 यज्ञे; T1 G3 M (except M3) सर्वे. Some MSS. of both recensions पारि° (for पारि°); cf. v. l. 1. 1. 8; 47. 1 etc. K0 D1 च (for ह).

11 K1 missing. — a) M1.3.5 ins. च after जुह्वत्सु. K0.2.3 त्रृत्विक्षु हि; B5 G1 M2.4 °त्विक्षु च; G3 °त्विजेषु. Ś1 D5 M2.4 तथा; G3 अत्र. K3 m जुहृत्सु तेष्वथ तदा; K4 °त्सु द्विजमुख्येषु. — d) G3 सर्वे प्रा°; G6 सर्पप्रा°. Ś1 B5 D5 °भयंकराः.

12 K1 missing. — a) Ñ1.3 तेषां (for वसा-). K3 G3 °महाकु°. — b) K3 परिवर्तिताः. — c) T1 M ततो गं°. T2 G6 तु; G3 सु- (for च). K (K1 missing) Da1 D1.5 तुमलो (cf. v. l. 1. 1. 76 etc.).

13 K1 missing. — a) M2.4 °व दिव्यानां. — b) Ś1 Da1 D2 वेष्टि°; Ñ3 B (B2 missing) Dn (except Dn2) T G3.6 M विष्टि°; G2.4.5 निष्टि°. Ś1 B (B2 missing) Da D2.4 M3 तथांतरा; Ñ3 तथांतरात्; T1 °बले; G1.3 तदांबरे; M5 °बरात्. — c) D1.3.6.7 G2.4.5 °यंतानिशं शब्दाः. — d) D2 ज्वलतां; G6 दह्यतां. Ś1 K (K1 missing) D5 M (except M1.5) om. च.

14 K1 missing. — a) Ś1 D5 transp. तु and स. — After 14$^{ab}$, D6 ins.:

436* जगाम भयसंविग्नः शरणार्थी सुरर्षभम् ।

15 K1 missing. — a) M (except M1.5) तस्मै स°. Ñ3 यथान्यायं. — b) K3 स भुजंगमः. — In Ś1 the portion from 15$^{c}$ up to 1. 49. 3$^{d}$ is lost on the missing upper half of a fol. (36). G1 om. 15$^{c}$-17$^{b}$. — c) K0.2.4 V1 Da D1 आगच्छ°. — d) D3 अग्रे कृत्वा; D6 नमस्कृत्य; T1 रोक्षागस्य (sic); T2 G2.6 नमस्कृत्वा. Cd mentions आगः.

16 Ś1 K1 missing. G1 om. 16 (cf. v. l. 15).

प्रसादितो मया पूर्वं तवार्थाय पितामहः ।
तस्मात्तव भयं नास्ति व्येतु ते मानसो ज्वरः ॥ १७
एवमाश्वासितस्तेन ततः स भुजगोत्तमः ।
उवास भवने तत्र शक्रस्य मुदितः सुखी ॥ १८
अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः ।
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ॥ १९
कश्मलं चाविशद्घोरं वासुकिं पन्नगेश्वरम् ।
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ॥ २०
दह्यन्तेऽङ्गानि मे भद्रे दिशो न प्रतिभान्ति च ।
सीदामीव च संमोहाद्घूर्णतीव च मे मनः ॥ २१
दृष्टिर्भ्रमति मेऽतीव हृदयं दीर्यतीव च ।
पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ ॥ २२
पारिक्षितस्य यज्ञोऽसौ वर्ततेऽस्मज्जिघांसया ।
व्यक्तं मयापि गन्तव्यं पितृराजनिवेशनम् ॥ २३
अयं स कालः संप्राप्तो यदर्थमसि मे स्वसः ।
जरत्कारोः पुरा दत्ता सा त्रायस्वास्मान्सबान्धवान् ॥ २४
आस्तीकः किल यज्ञं तं वर्तन्तं भुजगोत्तमे ।
प्रतिपेत्स्यति मां पूर्वं स्वयमाह पितामहः ॥ २५
तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतम् ।
ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् ॥ २६

C. 1. 2066
B. 1. 53. 26
K. 1. 53. 26

इति श्रीमहाभारते आदिपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

— a) Da D3.4.6.7 संप्रीतो. — b) M2.4 °स्तीति. — d) Ñ2 V1 B (B2 missing) D M5 कदाचन.

17 Ś1 K1 missing. G1 om. $17^{ab}$ (cf. v. l. 15). — b) K2 तवार्थं स; D5 तवार्थं प्र-; M2.4 तदार्थाय. — d) M (except M1) व्यैतु. G1.3 M1.5 मनसो. G1 भयं.

18 Ś1 K1 missing. Before 18, Ko.4 B3 Dn D1 T1 ins. सौतिरु°; K2.3 B5 Da D3–7 सूत उ°. — c) K3.4 भुवने. K (K1 missing) Ñ3 T G2.4.5 M तस्य; Ñ1.2 V1 B (B2 missing) G3 तस्मिन्.

19 Ś1 K1 missing. — b) G2 नागेंद्र भृश°.

20 Ś1 K1 missing. — a) G6 M1.5 प्राविशत्. — b) K2.3 D3 S वासुकिः. K2.3 Ñ3 T G2–5 M °गेश्वरः; V1 Dn D1.3.4.6.7 G1.6 °गोत्तमं (G1.6 °मः). — c) Ko.4 Da संघू°; T1 G2.4.5 सुघू°.

21 Ś1 K1 missing. Before 21, K4 D4 ins. वासुकिरु°; T2 G (except G3) वासुकिः. — a) Ñ V1 B (B2 missing) Da Dn D2.4 T1 G4 दह्यंति; D1 G1 दहंते. — b) Ñ1.2 V1 B (B2 missing) D (except D5) transp. दिशः and न. D3.6.7 मे; D5 चै (for च). — d) D2 भ्रमतीव; T1 घूर्णमानं; M1.5 दह्यतीव. Ko.2 D5 च मेदिनी.

22 Ś1 K1 missing. — a) Ñ1 B5 D (except D2.4.5) भ्राम्य°; Ñ3 भवति. — b) D5 शीर्यं°. M1.5 इति (for इव). K2 वः; K4 मे (for च). — K4 om. $22^{cd}$. — c) Ñ3 °ष्याम्येव सोद्याहं. — d) K2.3 Ñ2 V1 B (B2 missing) D (except Dn D1) हुताशने (for विभा°).

23 Ś1 K1 missing. — a) Some MSS. of both recensions पारी° (for पारि°); cf. v. l. 1. 1. 8; 47. 1 etc T1 वा (for असौ). — b) K4 Da D1.2.4 T2 स्म (for ऽस्मज्). — c) G2.4.5 अवश्यमपि. Ñ3 हि (for अपि). — d) Ñ2 V1 B (B2 missing) D प्रेतराज°; M1.5 तत्र राज°.

24 Ś1 K1 missing. — a) T1 M2.4 हि (for स). — b) T1 G3 M अपि (for असि). — c) K3 Ñ V1 D (except Da D1.3) °त्कारौ. K3 Ñ2 V1 B (B2 missing) D G2 मया (for पुरा). — d) K (K1 missing) Ñ1.2 V1 Dn D1 (all om. सा) त्रायस्वास्मान्; G1 संत्राह्यस्मान्; M1.5 सत्राद्स्मान्.

25 Ś1 K1 missing. — a) Ko.2.4 transp. यज्ञं and तं. M (except M1.5) °ल वर्ततं. — b) M (except M1.5) यज्ञं वै (M4 तं) भु°. T2 G (except G3) वर्तमानं भुजंगमे. — c) T2 M (except M1.5) मा. K3 प्राह (for पूर्वं). Ñ3 G3 प्रतिपेत्स्यतीति मे (Ñ3 मा) पूर्वं. — d) K3 पूर्वं; G2 एव (for आह).

26 Ś1 K1 missing. — a) M1.5 अस्मात्सा; M2.4 तद्वसेत्. Ko.2.4 D3 M वत्सं तं (M1.5 वर्ततं); D6.7 G3 °त्सं त्वं. — d) T1 वीर्यवत्तमं.

Colophon. Ś1 K1 missing. — *Sub-parvan*: Ko.2.4 Ñ V1 B (B2 missing) Da D2.3.6.7 S आस्तीक (v. l. आस्तिक, अस्तीक); to it Ñ1.2 V1 add सर्पसत्रे; K3 Dn D1 om. आस्तीक, mention only सर्पसत्रे. — *Adhy. name*: Ko.2.4 Ñ1.2 V1 वासुकिवाक्यं. — *Adhy. no.* (figures, words or both): Ko 48; K3 (*sup. lin. sec. m.*) T 45; Ñ1.2 V1 B1 Da1 Dn3 52; D4 marg. 51; G M 35 (G2 37; G3.5.6 M3 36). — *S'loka no.*: Da1 Dn 26. — *Aggregate s'loka no.*: Dn2 2041.

## ४९

C. 1. 2067
B. 1. 54. 1
K. 1. 54. 1

सूत उवाच ।
तत आहूय पुत्रं स्वं जरत्कारुर्भुजंगमा ।
वासुकेर्नागराजस्य वचनादिदमब्रवीत् ॥ १
अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः ।
कालः स चायं संप्राप्तस्तत्कुरुष्व यथातथम् ॥ २
आस्तीक उवाच ।
किंनिमित्तं मम पितुर्दत्ता त्वं मातुलेन मे ।
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्तास्मि तत्तथा ॥ ३
सूत उवाच ।
तत आचष्ट सा तस्मै बान्धवानां हितैषिणी ।
भगिनी नागराजस्य जरत्कारुरविक्लवा ॥ ४
भुजगानामशेषाणां माता कद्रूरिति श्रुतिः ।
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ॥ ५
उच्चैःश्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम ।
विनतानिमित्तं पणिते दासभावाय पुत्रकाः ॥ ६
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ।
तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ ॥ ७
तां च शप्तवतीमेवं साक्षाल्लोकपितामहः ।
एवमस्त्विति तद्वाक्यं प्रोवाचानुमुमोद च ॥ ८
वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ।
अमृते मथिते तात देवाञ्शरणमीयिवान् ॥ ९
सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम् ।
भ्रातरं मे पुरस्कृत्य प्रजापतिमुपागमन् ॥ १०
ते तं प्रसादयामासुर्देवाः सर्वे पितामहम् ।

---

### 49

1 This adhy. is missing in $K_1$, which has a lacuna here (cf. v. l. 1. 47. 20). In $Ś_1$, 1–3 are lost on the missing upper half of a fol. (36); cf. v. l. 1. 48. 15. $K_{0.3.4}$ $B_{1.4}$ Dn $D_1$ सौतिरु°; S ($M_{2.4}$ om.; $T_2$ $G_3$ with prefixed श्री) सूतः. — [a]) $Ñ_3$ transp. पुत्रं and स्वं.

2 $Ś_1$ $K_1$ missing. Before 2, $K_{0.4}$ $Ñ_1$ $B_3$ $D_4$ T $G_{3-6}$ ins. जरत्कारुरु°. — [b]) $K_3$ महात्मना (for निमि°). — [d]) Ko ते; $T_2$ $G_{2.4.5}$ तं. $K_3$ यथामतं; $T_1$ °सुखं.

3 $Ś_1$ $K_1$ missing. $D_6$ S om. उवाच. — [b]) $B_5$ $Dn_2$ $D_{3.6.7}$ वै (for मे). — [d]) $K_{0.2.4}$ अहं (for तत्). $B_5$ तदा (m as in text).

4 $K_1$ missing. $G_3$ om. 4 and 5. $Ś_1$ resumes. $D_{3.6.7}$ om. सूत उ°. $Ś_1$ S ($G_3$ om.) सूतः; $K_{0.3.4}$ $B_{1.4}$ Dn $D_1$ सौतिरु°. — [a]) $Ñ_3$ transp. सा and तस्मै. $T_1$ तत् (for सा). $B_5$ (m as in text) Da तस्मिन्. $K_3$ तत आचक्षदस्मै सा; $G_1$ आचचक्षे ततस्तस्मै. — [d]) Nilp अविप्लवा.

5 $K_1$ missing. $G_3$ om. 5 (cf. v. l. 4). Before 5, $V_1$ (*inf. lin.*) $B_{3.5}$ D T G ($G_3$ om.) ins. जरत्कारुः. — [a]) $K_3$ G ($G_3$ om.) भुजं°; $Ñ_2$ $V_1$ B ($B_2$ missing) D पन्नगा°. — [b]) Ñ $V_1$ B ($B_2$ missing) Da Dn $D_{1.4.5}$ $G_{1.5}$ श्रुता; $D_{3.6.7}$ T $G_{2.4.6}$ M (except $M_3$) स्मृता. — [c]) $G_1$ कुपितया. — [d]) $M_{2.3}$ (*inf. lin.* as in text).4 मे (for तत्).

6 $K_1$ missing. — [a]) $D_5$ om. सः. $K_3$ °श्रवास्तुरंगोयं; $Ñ_3$ $G_1$ °श्रवस्याश्वराज्ञः; T $G_{2.4-6}$ M °श्रवस्यश्वराजे. — [b]) Ko यन्न मिथ्याकृ°; $K_2$ $D_1$ यस्मिन्मिथ्याकृ°. $D_{3.6.7}$ मया (for मम). $Ñ_{1.3}$ $T_1$ $G_3$ M यन्मिथ्या कुरुतेह ($M_3$ °पि) मा ($Ñ_3$ सा; $M_{1.5}$ तत्; $M_{2.4}$ मां); $V_1$ °थ्या कुरुतामिमां; $T_2$ $G_{1.4.5}$ यो मे न कुरुते वचः; $G_2$ मन्मिथ्या कुरुते महान्; $G_6$ °थ्या कुरुते मम. — [cd]) Hypermetric! $K_{0.4}$ $Ñ_2$ $V_1$ B ($B_2$ missing) D विनतार्थाय. $M_{1.5}$ पणितौ. S (except $G_{5.6}$ $M_{1.5}$) दासी° (cf. v. l. 1. 18. 4, 5). $K_2$ marg. *sec. m.* पणिते दासभावाय विनतायास्तु पुत्रकाः.

7 $K_1$ missing. — [a]) Hypermetric! Ko $D_5$ जन्मे°. $Ś_1$ $B_4$ यज्ञे वै; $D_2$ यज्ञो यः. $B_{1.3}$ $T_1$ $M_{1.5}$ transp. वो and यज्ञे. — [d]) G (except $G_{1.3}$) $M_3$ पितृलो°.

8 $K_1$ missing. — [a]) $Ñ_2$ $V_1$ B ($B_2$ missing) D देवः (for एवं). — [d]) $Ś_1$ उवाच. $G_3$ स (for अनु-). $T_2$ $G_2$ ह.

9 $K_1$ missing. — [b]) $Ś_1$ $K_4$ $Ñ_3$ $G_{2.4.5}$ तथा. — [c]) $K_2$ वापि; $K_4$ चापि; $D_1$ तावत् (for तात). — [d]) $Ñ_3$ $Da_1$ $D_6$ S (except $M_1$) °मेयि°.

10 $K_1$ missing. — [a]) $D_5$ हि (for च). $K_3$ °श्चामराः. — [b]) $T_1$ प्राश्या°. $G_1$ प्राप्य चामृतमुत्तमं. — [d]) $K_3$ $Ñ_2$ $V_1$ B ($B_2$ missing) D पितामहमु°.

राज्ञा वासुकिना सार्धं स शापो न भवेदिति ॥ ११
वासुकिर्नागराजोऽयं दुःखितो ज्ञातिकारणात् ।
अभिशापः स मात्रास्य भगवन्न भवेदिति ॥ १२
ब्रह्मोवाच ।
जरत्कारुर्जरत्कारुं यां भार्यां समवाप्स्यति ।
तत्र जातो द्विजः शापाद्भुजगान्मोक्षयिष्यति ॥ १३
जरत्कारुरुवाच ।
एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगेश्वरः ।
प्रादान्मामभरप्रख्य तव पित्रे महात्मने ।
प्रागेवानागते काले तत्र त्वं मय्यजायथाः ॥ १४
अयं स कालः संप्राप्तो भयान्नस्त्रातुमर्हसि ।
भ्रातरं चैव मे तस्मात्त्रातुमर्हसि पावकात् ॥ १५
अमोघं नः कृतं तत्स्याद्यदहं तव धीमते ।
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ॥ १६
सूत उवाच ।
एवमुक्तस्तथेत्युक्त्वा सोऽस्तीको मातरं तदा ।
अब्रवीद्दुःखसंतप्तं वासुकिं जीवयन्निव ॥ १७
अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम ।
तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते ॥ १८
भव स्वस्थमना नाग न हि ते विद्यते भयम् ।
प्रयतिष्ये तथा सौम्य यथा श्रेयो भविष्यति ।
न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा ॥ १९
तं वै नृपवरं गत्वा दीक्षितं जनमेजयम् ।
वाग्भिर्मङ्गलयुक्ताभिस्तोषयिष्येऽद्य मातुल । C. 1. 2087 B. 1. 54. 21 K. 1. 54. 21

11 K1 missing. — a) M1.5 सं- (for तं). — b) Ś1 transp. देवाः and सर्वे. Dn (except Dn3) D1.3.6.7 सुराः (for देवाः). B (B2 missing) D सर्वैर्ब्जसंभवं (D2 °वें स्वयंभुवं). — Before $11^{cd}$, K0.4 T1 G1.3.6 ins. देवा ऊचुः. — c) D6 °ना पूर्वं. — d) Ñ2 V1 B (B2 missing) D शापोसौ (D6 °यं) न.

12 K1 missing. Before 12, Ñ V1 B (B2 missing) D T1 M (except M1.5) ins. देवा ऊचुः. — a) G2.4.5 °राजोपि. — b) K2.3 अपि शा°. K0.2.4 स मातुश्च; K3 समम्रोस्य; Ñ2 V1 B (B2 missing) D स मातुस्तु (D5 °वैं); T2 G2 स्वमात्रा°. M1.3.5 अभिशापश्च मातुः स. — d) Ś1 D5 G3 यथा; Ñ1 T2 G4.5 M तथा (M5 °तः); Ñ2.3 V1 B (B2 missing) Da Dn D1-4.6.7 कथं; T1 G1.2.6 तदा (for इति). — After 12, K4 ins.:

437* तथा विधीयतामेतद्देवदेव जगत्पते ।

13 K1 missing. D7 om. ब्रह्मो°. Ś1 (with prefixed श्री) T2 G2-4 पितामहः; K0.2m.4 Ñ1.3 D5 पितामह उ°; K3 श्रीब्रह्मा उ°; D1.6 T1 G1.5.6 M ब्रह्मा. — b) Ś1 K2 T G M1.5 यो (G1 अथ) भा°; M2 भार्यायां (sup. lin. as in text); M3 भार्यां तां. — c) Ś1 तस्मात्; K0.2.4 ततो; K3 तस्यां. G6 M5 शापो (for जातो). — d) A few MSS. भुजंगा°. K0.4 मोच°. Ñ2 V1 B (B2 missing) D मोक्षयिष्यति पन्नगान्.

14 K1 missing. In Ś1, the portion from $14^{a}$–$28^{e}$ is lost on the missing upper half of a fol. (37). Ñ2 V1 B (B2 missing) D (except D2.4.5) G1-3 om. जरत्कारुरु°. — b) Ñ2 V1 B (B2 missing) D M1.5 पन्नगोत्तमः. — e) G3 यज्ञे (for काले). — f) K2 Dn D1 M3.4 तस्मात्त्वं; K3 तत्सत्वं; D3.6.7 ततस्त्वं; M1.2.5 पुत्र त्वं.

15 Ś1 K1 missing (cf. v. l. 14). — b) S (except T1 M1.5) भवाच्च°. D3 S (except M1) अर्हति. — c) Da Dn D1.3.6.7 चापि (for चैव). — d) D7 G (except G3.6) M1.2.5 अर्हति.

16 Ś1 K1 missing. — a) Ñ V1 B (B2 missing) D T1 M2.4 न (T1 अ)मोघं (T1 °घः; M2.4 °घे). Ñ3 V1 B (B2 missing) D तु; G3 तत् (for नः). K3 न मोघं तत्कृतं नः स्यात्. — b) D3.6.7 यदयं धीमते तव. — c) M3 दत्तास्मि मो°.

17 Ś1 K1 missing. K0.4 B1.4 Dn D1 सौतिरु°; S सूतः. — b) Ñ V1 Dn (except Dn3) सास्तीको; D3.6.7 आस्ती°. ❀ Nil.: सोस्तीक [text] इत्यपपाठः। ❀ D3.7 मुदा; G3 तथा. — d) G3 वचनं (for वासुकिं).

18 Ś1 K1 missing. — Before 18, B3 ins. आस्तीक उ°. — a) G2 अतः; G5 अत्र (for अहं). — b) Ñ1.3 T2 पन्नगेश्वर. — c) K3 महाभाग; V1 B4 (m as in text) विरमये; G3 °सत्रे; M1.5 °तत्व.

19 Ś1 K1 missing. — a) G1 तात (for नाग). K3 D2 भव स्वस्थो महाना(D2 °भा)ग; S (except G1) स्वस्थो भव महाभा(G3.5 M2-4 °ना)ग. — D1 om. $19^{c}$–$20^{b}$. — c) D5 °तिष्याम्यहं. Ñ2 V1 B (B2 missing) D (except D2.5; D1 om.) राजन् (for सौम्य). — d) D3.4.6.7 भवेदिति. — e) Cf. 1. 38. 2; 43. 28.

20 Ś1 K1 missing. D1 om. $20^{ab}$ (cf. v. l. 19). — a) K0.2.4 D2.5 °यिष्यामि मा°; K3 Ñ1.3 V1 B1 (m as in text).3-5 ज्ञा(Ñ3 जा; B5 गा)पयिष्येद्य (K3 °थ). — c) M1.5 न (for स). D2.5 G1 यज्ञं. Da D2.5 G1

यथा समुद्रो भगवान्यथा च हिमवान्गिरिः ।
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ॥ २७
य इदं श्रावयेद्विद्वान्ब्राह्मणानिह पर्वसु ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयं स गच्छति ॥ २८
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यं तस्य तच्छ्राद्धमुपतिष्ठेत्पितॄनपि ॥ २९
अह्ना यदेनश्चाज्ञानात्प्रकरोति नरश्चरन् ।
तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ॥ ३०
भारतानां महज्जन्म महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ३१
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम् ॥ ३२

C. 1. 2333
B. 1. 62. 52
K. 1. 62. 55

---

493*): T2 G2.4–6, after 26:

494* योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः ।
चतुरो वार्षिकान्मासान्सर्वपापैः प्रमुच्यते ।
विज्ञेयः स च वेदानां पारगो भारतं पठन् ।
देवा ब्रह्मर्षयो यत्र पुण्या राजर्षयस्तथा ।
कीर्त्यन्ते धूतपाप्मानः कीर्त्यते केशवस्तथा ।

With lines 4–5 of. 1. 1. 192. — N cont.:

495* भगवांश्चापि देवेशो यत्र देवी च कीर्त्यते ।
अनेकजननो यत्र कार्त्तिकेयस्य संभवः ।
ब्राह्मणानां गवां चैव माहात्म्यं यत्र कीर्त्यते ।
सर्वश्रुतिसमूहोऽयं श्रोतव्यो धर्मबुद्धिभिः ।

After the above, K1 reads 31.

☞ The rest of this adhy., as preserved in the different versions, is in a chaotic condition, containing much repetition and showing obvious signs of interpolation and recasting. The constituted text is frankly eclectic, representing as it does the irreducible minimum, comprising only stanzas authenticated by both recensions and following in general the sequence of K. The divergent (and evidently amplified) version of D3 S has been relegated to App. I (No. 32), where also its points of contact with N are shown.

27 Occurs in Ñ V1 B D in the course of a passage ins. after 31 (App. I, No. 33); and in S, that of a passage subst. for 29–33 (ibid., No. 32). — a) K (except K1) सुमहान्; G [ऽ]तिमहान्; M8 हि महान्. — b) K1 स (for च). B6 D (except D2.4.5) यथा मेरुर्महा°. — c) Ñ V1 B D (D5 om.) transp. ख्यातौ and उभौ. K1 ख्यातौ रत्नाकरावेतौ; S ख्यातौ (T1 G1 °तो) रत्नाकरौ (T1 G1 °करस्) तद्वत्. — d) S महाभा°. K3 *sup. lin.* °मुत्तमं. — K repeats after 27 (K1, after 494*): 25cd (v. l. °दं नियतं सत्यवादिना), and 26ab (v. l. °र्ति विस्तरता); then follows 491* (in K3 it is a repetition; cf. v. l. 26).

28 a) D3 transp. यः and इदं. S यश्चेदं पठते वि°. — b) K1 S सदा पर्वसु (K1 °णि) पर्वसु (K1 °णि). — c) K1 गत°; G2–5 पूत°. B5 जितः सुद्धो (sic). — d) K3.4 -भूयाय गच्छति; Ñ1.2 V1 B4 Dn D5 गच्छति शाश्वतं; Ñ3 B1.3.5.6 Da गच्छेत्स (Ñ3 °द्-) शाश्वतं; D1 corrupt; D2 गच्छेत्सनातनं.

☞ For 29–32, D3 S subst. a lengthy passage of about 40 lines, given in App. I (No. 32), which includes, in slightly altered form but in the same relative sequence, all the remaining lines of the text. D4 includes some stray stanzas of the Southern passage, inserted at various points of its own text.

29 =(var.) 1. 1. 203. — M5 om. 29. — a) S (M5 om.) पित्र्ये (for श्राद्धे). Ñ V1 B D श्रावयेद्ब्राह्मणाञ्श्राद्धे. — b) Ñ V1 Dn3 D1.4 यश्चेमं; B1.3.6 यश्चात; B1 m Da Dn1.n2 यश्चेदं; B5 यश्चात्र; D2 यश्चैतत्; D3 यस्त्विदं; D5 यस्तात (for ब्राह्मणान्). B4 यश्च श्रद्धासमन्वितः. — c) Some MSS. अक्षयं. T G M3 अन्नपानं च; M6–8 स्वर्गगामीयं. — d) K3 इह (for अपि). Ñ V1 B D उपावर्तेत्पितॄनिह (D5 पितुस्तस्योपतिष्ठते); S (M5 om.) पितॄंस्तस्योपतिष्ठति.

30 S expands 30 into two stanzas, which are included in a long passage given in App. I (No. 32); while B1 D (except D3) expand 30ab into the following two lines:

496* अह्ना यदेनः क्रियते इन्द्रियैर्मनसापि वा ।
ज्ञानादज्ञानतो वापि प्रकरोति नरश्च यत् ।

[ D5 om. line 1; B1 Da om. line 2. D4 repeats line 1, reading राऽत्रा for अह्ना. ]
— d) K3 प्रतिमुच्यते.

31 K1 reads 31 after 495*. — b) K (except K3) इत्युत (for उच्यते). — After 31, N ins. a passage of about 20 lines given in App. I (No. 33).

C. 1. 2333 B. 1. 62. 53 K. 1. 62. 26 धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ ३३

इति श्रीमहाभारते आदिपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## ५७

वैशंपायन उवाच ।
राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
बभूव मृगयां गन्तुं स कदाचिद्धृतव्रतः ॥ १
स चेदिविषयं रम्यं वसुः पौरवनन्दनः ।
इन्द्रोपदेशाज्जग्राह ग्रहणीयं महीपतिः ॥ २
तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोरतिम् ।
देवः साक्षात्स्वयं वज्री समुपायान्महीपतिम् ॥ ३
इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै ।
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयत् ॥ ४
इन्द्र उवाच ।
न संकीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते ।
तं पाहि धर्मो हि धृतः कृत्स्नं धारयते जगत् ॥ ५

32 $^{ab}$) S °वर्षैर्महाभागः, and °यनोऽब्रवीत्. — $^{cd}$) S नित्योत्थितः सदायोगी महाभारतमादितः.

33 $D_3$ S read 33 after 21. — $^{d}$) $D_3$ न कुत्रचित्. — After 33, $K_4$ ins. a passage of six lines given in App. I (No. 34), while $D_3$ S ins.:

497* इदं हि ब्राह्मणैर्लोके आख्यातं ब्राह्मणेष्विह ।

Colophon. — *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $K_0$ अंशावतार; $T_1$ संभव. — *Adhy. name:* $K_0$ महाभारतप्रसंख्यानं; $K_1$ (after adhy. no.) जयो नामेतिहासः; $K_{2.3}$ $\tilde{N}_{1.2}$ $V_1$ ($\tilde{N}_{1.2}$ $V_1$ with prefixed महा-) $B_6$ Dn $D_5$ भारतप्रशंसा ($K_3$ °साख्यानं); $K_4$ $D_1$ प्रशंसा; $T_2$ $G_{1.4}$ भारतप्रश्नः; $M_5$ भारतप्रसङ्गं; $M_{6-8}$ जनमेजयप्रश्नः. — *Adhy. no.* (figures, words or both): $K_0$ 57; $K_3$ (*sup. lin. sec. m.*) $T_1$ 53; $\tilde{N}_{1.2}$ $V_1$ 62; $Da_1$ $D_3$ 59; $Dn_3$ 61; $D_4$ 60; $T_2$ G M 3 (of the संभवपर्व). — *S'loka no.:* $Da_1$ Dn 51. — *Aggregate s'loka no.:* $Dn_2$ 2307.

☞ In $D_3$ S this adhy. is followed by the prose adhy. (90) setting forth the genealogy of the Pauravas, commonly known as पूरुवंशानुकीर्तन.

## 57

1 This adhy. is missing in $Ś_1$ (cf. v. l. 1. 55. 3); the MS. is ignored here. — $K_1$ $Dn_1$ $D_3$ S om. उवाच. — $^{b}$) $B_4$ (m as in text) $D_{2.5}$ °निष्ठो. $B_3$m $D_{3.4}$ महामतिः (cf. v. l. 2$^{d}$); Cd as in text. — $^{c}$) S मृगयाशीलः. — $^{d}$) Ñ $V_1$ D (except $D_3$) सदा किल (for स कदाचित्). S शश्वत्स्वाध्यायवान् शुचिः (T $G_4$ $M_5$ विभुः).

2 $^{b}$) K वसुश्चेदिपतिर्नृपः. — $K_0$ om. 2$^{c}$–3$^{b}$. — $^{d}$) $K_2$ $\tilde{N}_2$ $V_1$ $B_{1.3}$ (both m as in text).$_{5.6}$ D (except $D_{4.5}$) रमणीयं ($B_6$m सिद्धोपायं); S स्पृह°; Cd as in text. $K_2$ Da $D_3$ महामतिः (cf. v. l. 1$^{b}$).

3 $K_0$ om. 3$^{ab}$ (cf. v. l. 2). — $^{a}$) $G_{1.2}$ त्यक्तशस्त्रं. — $^{b}$) $K_1$ $\tilde{N}_3$ $V_1$ °धनं; $K_2$ (*sup. lin.* धनं).$_{3.4}$ $D_5$ °रतं; $\tilde{N}_2$ B Da Dn $D_{1-4}$ $G_1$ °निधिं. — $^{cd}$) Ñ $V_1$ B D देवाः शक्रपुरोगा वै राजानमुपतस्थिरे; S देवराड् वज्र($G_3$ भद्र)सहित उपतस्थे मरुद्गणैः.

4 $^{ab}$) $K_2$m इन्द्रस्तमाह राजानं. S इन्द्रोऽह($M_{3.6-8}$ °य)मिति धैर्येण तपसा चे($G_{2.3}$ अ)त्यमन्यत. — After 4$^{ab}$, $G_6$ ins.:

498* त्वं नो गतिर्महाराजन्निति वज्र्यवदन्मुहुः ।

— $^{c}$) $\tilde{N}_3$ तं सान्त्व्य नृपतिं; $Da_1$ तस्मात्त्वेनं नृ°; S तं वै देवपतिः. K सांत्वयित्वा च ($K_3$ स) नृपतिं; $D_5$ तं सांत्वयित्वा नृपतिं. — $^{d}$) $K_{2.3}$ Ñ $V_1$ B D $G_{5.6}$ संन्यवर्तयन्. Cf. 500*.

5 $K_1$ S इन्द्रः; Ñ $V_1$ B D देवा ऊचुः (cf. v. l. 3$^{cd}$) — $^{ab}$) $D_5$ reads it in marg. $G_3$ न संतीर्येव धर्मो वै. $K_2$ सर्वथा (for पृथिव्यां). — $^{c}$) $K_4$ $\tilde{N}_{1.2}$ $V_1$ $B_{1.4}$ D $M_{6-8}$ त्वया ($K_4$ $D_2$ $M_{6-8}$ तपो) हि (for तं पाहि). $K_4$ $\tilde{N}_{1.2}$ $V_1$ B D विधृतः; $M_3$ हि कृतं (for हि धृ°). — $^{d}$) $\tilde{N}_{1.3}$ S पालयते. — T $G_{1.2.4-6}$ ins. after 5: $D_4$ marg. after उवाच (cf. v. l. 6):

499* देवानहं पालयिता पालय त्वं हि मानुषान् ।

6 Before 6, Ñ $V_1$ B D ins. इन्द्र उ° ($D_5$ देवा ऊचुः). — $^{a}$) $K_3$ लोक-; $\tilde{N}_3$ $B_4$ Dn $D_{1.4}$ लोके; $D_2$ $M_{6-8}$ लोकं; $T_1$ शौर्यं; $G_3$ कार्यं; the rest लो(or लौ)क्यं; Cd as in

लोक्यं धर्मं पालय त्वं नित्ययुक्तः समाहितः ।
धर्मयुक्तस्ततो लोकान्पुण्यानाप्स्यसि शाश्वतान् ॥ ६
दिविष्ठस्य भुविष्ठस्त्वं सखा भूत्वा मम प्रियः ।
ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥ ७
पशव्यश्चैव पुण्यश्च सुस्थिरो धनधान्यवान् ।
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥ ८
अत्यन्यानेष देशो हि धनरत्नादिभिर्युतः ।
वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥ ९
धर्मशीला जनपदाः सुसंतोषाश्च साधवः ।
न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा ॥१०
न च पित्रा विभज्यन्ते नरा गुरुहिते रताः ।
युञ्जते धुरि नो गाश्च कृशाः संधुक्षयन्ति च ॥ ११
सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद ।
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु यद्भवेत् ॥ १२
देवोपभोग्यं दिव्यं च आकाशे स्फाटिकं महत् ।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ १३
त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः ।
चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव ॥ १४
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ।
धारयिष्यति संग्रामे या त्वां शस्त्रैरविक्षतम् ॥ १५
लक्षणं चैतदेवेह भविता ते नराधिप ।
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥ १६

C. 1. 2349.
B. 1. 63. 16
K. 1. 64. 16

text. B4 धर्मान्; D2 धर्मात्. K2 पालयंस्त्वं (m as in text); G2 °यित्वा. D5 लोकान्धर्मेण रक्षित्वा. — $^{b}$) K3 मक्तियुक्तः; T G3.5 नित्यं युक्तः (G3 °क्ति-). — $^{d}$) K1 प्राप्नोषि; Ñ1.2 V1 Dn पश्य°; B3.6 D2 T G1.3 M3.6-8 प्राप्स्य°; G2.4-6 M5 लप्स्य°. M3 शोभनान्.

7 $^{a}$) K (except K1) Ñ3 D5 G3 M द्विवि(Ñ3 °व)स्थस्य. K (except K1) Ñ3 B1.5 D5 G1.3 M भुविस्थ°. — $^{b}$) Ñ1.2 V1 D (except D2) सखा भूतो. — $^{c}$) K0.2.4 ऋद्धः; K1 रूपं; Ñ V1 ऊर्ध्वः; B1.3.6 उच्चः (B1m as in Da Dn etc.); B4.5 ऊर्ध्वं; Da Dn D1.3 रम्यः; D2.5 श्रेष्ठः; D4 उच्चैः; T1 G3 ऊढः; G1 ऊचुः; G2 गूढः. K3 T2 G4-6 M as in text. K3 B4 G4-6 M6-8 पृथिव्या (as in text); the rest °व्यां. — $^{d}$) D3.4 नरेश्वर.

8 $^{a}$) B4 प्रशस्यश्चैव (m as in text). K1 D3 °व्यश्च सु-; D5 °व्यं च सु-. K D5 रम्यश्च. — T1 om. 8$^{bc}$. — $^{b}$) K (except K1) M5 सुस्थितो; Ñ2 V1 B D (except D5) T2 प्रभूत-. — $^{c}$) K2.3 T2 G2.5.6 सुरक्ष°; Ñ2 D2 G1.3 M सुरक्ष्य°. Ñ3 S (T1 om.) धन्यः (Ñ3 *sup. lin.* पुण्यः; M5 धर्म्यः) (for सौम्यः). K2m शुद्धो मेध्यश्च रम्यश्च. — $^{d}$) Ñ3 T1 G1.3 भोगैर्; T2 G2.4-6 भाग्यैर्. T2 G2-6 भूरिगुणैर्.

9 $^{ab}$) K1 अग्रवान्; Ñ1.3 B1m Dn D1.3 अर्थवान्; B5.6 Da D4 अन्नवान्; D2 अन्यस्मात्; T2 G6 अनन्यः; G1 धनवान्. Da1 D2 एव; Da2 इव. K1 वै देशो; B5.6 D2 देशोयं; Da °शोति; G1 °शोपि. K4 Ñ2 V1 B1.3.4 अनभ्यावेश(Ñ2 V1 °न्यवेष-; B4 °न्यादेश)देशोयं (K4 B3 °शो हि). Da °रत्नर्द्धिभिर्; G3.5 °धान्यादिभिर्. K3 °द्धिसंयुतः. D5m अतिक्रम्यापरान्देशान्धनरत्नादिभिर्युतान्. — $^{c}$) T2 G (except G1.3) वसो रक्षस्व वसुधां. — $^{d}$) B5 transp. चेदिषु and °प. K (except K1) T2 भूमिप; Ñ3 चेदिह (m भूमिप) (for चेदिप).

10 $^{a}$) G1.3 जनाश्चात्र. — $^{b}$) K (except K1) सुसंतुष्टाश्च. Ñ1 मानवाः.

11 $^{b}$) Dn D1.4 पुत्रा (for नरा). Ñ2 V1 B Da2 न गुरोरहि°. — With 11$^{cd}$ cf. 1. 58. 19$^{cd}$. — $^{c}$) T G M3 युंजंति; M5-8 युज्यंति. K न गामयुंजन्त धुरि (K3 न गां प्रयुंजन्ति धुरं). — $^{d}$) K0.2 कृशं; K3.4 कृशां; Ñ V1 B D T G6 M कृशान्. B6 संरक्ष°; D2 संवर्ध°; G3 विंदुक्षयेपि(!). ❀ Arj.: धुरि नो गाश्च । हलशकटादौ स्त्रीगवीर्न युंजते नापि कृशान्वृषानपि । कृशा इति पाठे स्त्रीगवीरेव ।❀

12 $^{a}$) K3 B1 T2 G (except G3) M3.5 सर्वे-. Ñ1.3 T1 M स्वकर्म°; D2 च कर्म°. — $^{b}$) Dn1.n3 मानव; Dn2 G M °वाः; T मानुषाः. — $^{c}$) B5 G3 M6-8 तेस्त्वविं°; T2 तेप्यवि°.

13 $^{a}$) A few MSS. दैवो°. B (except B4) D (except D2-5) त्वां (for च). — M6-8 om. 13$^{bc}$. — $^{b}$) Ñ3 आकाशं; T2 ह्याकाशे; G6 विमानं. — $^{c}$) D3 G3-5 त्वं; T G1.2 M3 च; M5 तं. B4.5 Da G6 मया (G6 त्विदं) दत्तं. T M3.5 दिव्यं च (for मद्दत्तं). — $^{d}$) D3 °पत्स्यसे; S °लप्स्यसि (G1.2.4-6 °से).

14 $^{a}$) Ñ3 °वर्णेषु (*sup. lin.* as in text). — $^{c}$) B4-6 Da D3 M3 उपरिष्टो. Ñ1.2 V1 B D (except D5) हि (for वै).

15 $^{a}$) B Da2 M5 ददानि. — $^{c}$) S °ष्यसि. — $^{d}$) S यां. S त्वं (G2.4-6 च) (for त्वां). K0-2 M5 अपि क्षतां(K0 M5 °तं); K3 अपि क्षितं; D2 T2 G2-6 M3.6-8 °क्षतः; T1 G1 अवीक्षितः.

16 $^{a}$) Ñ3 लोकानां; G6 लांछनं; Cd लक्षणं (as in text). — $^{c}$) T G विख्यातां; M °ता. — $^{d}$) V1 शूरं

C. 1. 2350
B. 1. 63. 17
K. 1. 64. 17

वैशंपायन उवाच ।
यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः ।
इष्टप्रदानमुद्दिश्य शिष्टानां परिपालिनीम् ॥ १७
तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास गते संवत्सरे तदा ॥ १८
ततः प्रभृति चाद्यापि यष्ट्याः क्षितिपसत्तमैः ।
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ॥ १९
अपरेद्युस्तथा चास्याः क्रियते *उच्छ्रयो नृपैः ।
अलंकृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः ।
माल्यदामपरिक्षिप्ता विधिवत्क्रियतेऽपि च ॥ २०
भगवान्पूज्यते चात्र हास्यरूपेण शंकरः ।
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ॥ २१

---

(for धन्यं). T G धन्यामप्रतिमां वह; M धन्या चाप्रतिमा भुवि (M3.5 भवेत्). — D3.4 (marg.) T G1.3 ins. after 16: G2.4–6, after 17:

500* एवं संसान्त्व्य नृपतिं तपसः संन्यवर्तयत् ।
[ Cf. 4[cd]. — G1 T1 तु सांत्व्य; G2 संसृज्य. ]

After the above line, G2.4–6 ins. 501* (cf. v. l. 17).

17 All MSS. except G6 om. वैशंपायन उ°. — [a]) Dn1 G (except G1.3) वैष्णवीं. D2 तत्र. — [b]) G1.3 प्रादात्. MSS. mostly °निसूदनः. — [c]) G6 शत्रूणामपि संहर्त्रीं. — [d]) K1 Ñ1.2 V1 Dn D1–3 प्रति°; K3 T2 M °पालनीं; B Da D4 प्रतिपालनीं; T1 अनु°; G1.3 °पालनं. — D3.4 (marg.) T G1.3 ins. after 17: G2.4–6 after 500*:

501* प्रययौ देवतैः सार्धं कृत्वा कार्यं दिवौकसाम् ।
ततस्तु राजा चेदीनामिन्द्राभरणभूषितः ।
इन्द्रदत्तं विमानं तदास्थाय प्रययौ पुरीम् ।
[ (L. 3) D3 T1 G1.3.6 पुरम्. ]

18 [a]) D3.5 T2 तस्य; G6 स तु. — [b]) K0.2.4 सदा (for त°). — After 18[c], T G ins.:

502* सर्वोत्सववरं तदा ।
मार्गशीर्षे महाराज.
[ Cf. 503*. T G3 सर्वोत्साहं परंतप: (for सर्वो° etc.). ]

— [d]) G (except G3) पूर्वपक्षे महामखं. — After 18, M3.5 ins.:

503* मार्गशीर्षे महाराज पौर्णमास्यां महामहम् ।

19 [a]) B4 Da S (except M6–8) तदा. — [b]) Dn D1 यष्टेः; G1.6 षष्ठ्यां.

20 [a]) Ñ V1 B D (except D5) °द्युस्ततस्तस्याः. — [b]) M3.6–8 transp. क्रियते and उच्छ्रयः. K1 Ñ1.2 V1 Dn D1.3.5 Cd -स्युच्छ्रयो; K2–4 B3 Da D4 -स्युच्छ्रयो; D2 °त्सवो. Ñ3 M5 क्रिया(Ñ3 °य)स्युच्छ्रायणं नृपैः (sic); T G कुर्वन्त्येते ध्वजोच्छ्रयं (G3 °जोत्सवं). — [c]) S पुलकैर्; Cd पिटकैर् (as in text). — [d]) K3 Ñ1.2 V1 B Da D2–4 T1 G2–6 गंधमा°. B1.3.4 Da D2–4 M (except M3) सु- (for च). — [e]) D3.4 T G3.5.6 °क्षिप्तां. — D3.4 T G ins. after 20[e] (G1, which om. 20[ef], ins. after 20[d], omitting the first 3½ lines; G3 om. line 3):

504* द्वात्रिंशत्किष्कुसंमिताम् ।
उद्धृत्य पीठके चापि द्वादशारत्निकोच्छ्रिते ।
महाराजतवासोभिः परिक्षिप्य ध्वजोत्तमम् ।
वासोभिरन्नपानैश्च पूजितैर्ब्राह्मणर्षभैः ।
पुण्याहवाचनं कृत्वा ध्वज उच्छ्रीयते तदा । [5]
शङ्खभेरीमृदङ्गैश्च.

[ After the first half-line, G6 ins.:

505* चतुर्विंशत्यङ्गुलात्मा हस्तः किष्कुरिति स्मृतः ।

(L. 2) G3 वितते चापि. — (L. 3) D3.4 महारजत°. ]

— M3.5 ins. after 20[e]:

506* द्वात्रिंशत्किष्कुरायता ।
पीठे च द्वादशारत्नीरुच्छ्रिते रत्नभूषिते ।
वासोभिः पञ्चवर्णैस्तु समाल्यैर्भूषितं ध्वजम् ।

[f]) In D3, 20[f] is repeated (see below). M (except M5) °यतेति च. D3 (both times) क्रियते विधिवत्तदा (cf. v. l. 21); T G1.3 संनादः क्रियते तदा (G1.3 °तः); G2.4–6 संनाहं चक्रिरे तदा (G6 °तः).

21 In D3, 21[ab] is repeated (see below). — [a]) T तत्र (for चा°). — [b]) N हंस(K1 हाम्यहाम्य-; B1m Cd हास-; D3 यष्टि )रूपेण. B5 Dn चेश्वरः (for शं°). D3 (both times) T G यष्टिरूपेण वासवः. ❀ Nil.: हंसरूपेण वासव इति पाठे स्पष्टोऽर्थः । ❀ — D3.4 T G ins. after 21[ab]: D6, after 21:

507* माणिभद्रादयो यक्षाः पूज्यन्ते दैवतैः सह ।
नानाविधानि दानानि दत्वार्थिभ्यः सुहृज्जनैः ।
अलंकृत्वा माल्यदामैर्वस्त्रैर्नानाविधैस्तथा ।
व्रतिभिः सजलैः सर्वैः क्रीडित्वा नृपशासनात् ।
सभाजयित्वा राजानं कृत्वा नर्माश्रिताः कथाः । [5]
रमन्ते नागराः सर्वे तथा जानपदैः सह ।
सूताश्च मागधाश्चैव नटन्ते नटनर्तकैः ।
प्रीत्या च नरशार्दूल सर्वे चक्रुर्महोत्सवम् ।
सान्तःपुरः सहामात्यः सर्वाभरणभूषितः ।
महाराजतवासांसि वसित्वा चेदिराट् तथा । [10]
जातिहिङ्गुलिकेनाक्तः सदारो मुमुदे तदा ।

एतां पूजां महेन्द्रस्तु दृष्ट्वा देव कृतां शुभाम् ।
वसुना राजमुख्येन प्रीतिमानब्रवीद्विभुः ॥ २२
ये पूजयिष्यन्ति नरा राजानश्च महं मम ।
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ॥ २३
तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति ।
तथा स्फीतो जनपदो मुदितश्च भविष्यति ॥ २४
एवं महात्मना तेन महेन्द्रेण नराधिप ।
वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः ॥ २५
उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।
भूमिदानादिभिर्दानैर्यथा पूता भवन्ति वै ।
वरदानमहायज्ञैस्तथा शक्रोत्सवेन ते ॥ २६
संपूजितो मघवता वसुश्चेदिपतिस्तदा ।
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ।
इन्द्रप्रीत्या भूमिपतिश्चकारेन्द्रमहं वसुः ॥ २७
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः ।
नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत् ॥ २८
महारथो मगधराड्विश्रुतो यो बृहद्रथः ।
प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम् ।
मच्छिल्लश्च यदुश्चैव राजन्यश्चापराजितः ॥ २९
एते तस्य सुता राजन्राजर्षेर्भूरितेजसः ।

C. 1. 2364
B. 1. 63. 32
K. 1. 64. 46

---

एवं जानपदाः सर्वे चक्रुरिन्द्रमहं तदा ।
यथा चेदिपतिः प्रीतश्चकारेन्द्रमखं वसुः ।

[ After line 1, D3 repeats the last half-line of 504*, $20^{f}$ and $21^{ab}$. — After line 10, D3 G6 ins.:

508* रेजे चेदिपतिस्तत्र दिवि देवपतिर्यथा । ]

— D3 T G om. $21^{cd}$.

22 $^{a}$) Dn D1.5 स तां (for एतां). K0 पूजामेवं [म]हेंद्र°. — $^{b}$) Read देवकृतां? B1 (m as in text) Dn देवः; D3 T G वसु°; M (except M5) तेन. Dev. appears to have construed देवकृतां as a compound. G1 तदा (for शुभाम्). ❀ Nil.: देवः कृतामिति पाठः । विसर्गाभावे तु देवेति जनमेजयसंबोधनम् । ❀ — After $22^{ab}$, D3.4 T G ins.:

509* हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ।
आस्थाय सह शच्या च वृतो ह्यप्सरसां गणैः ।

23 $^{a}$) D3 पूजयिष्यन्ति च न°. — $^{b}$) D3 G (except G3) मखं; Cd as in text. B4.5 यष्टिमेतां शुभां मम. — $^{c}$) M6–8 च तथा. — $^{d}$) T2 G4–6 नृप.

24 $^{a}$) T G श्रीर्विभव°. — $^{b}$) G1.2 नरेन्द्राणां. — $^{c}$) Ñ1.3 D3 T G2.3 तस्य (Ñ3 *sup. lin.* ततः) स्फीतो; G4–6 तस्येप्सितो; M3.6–8 तेषां स्फी(M3 प्री)तो. — After 24, D3.4 (marg.) T G ins.:

510* निरीतिकानि सस्यानि भवन्ति बहुधा नृप ।
राक्षसाश्च पिशाचाश्च न लुम्पन्ते कथंचन ।

[ (L. 1) G2.4.5 निरातंकानि. G3 भविष्यन्त्यम्बुदानि च. ]

25 Before 25, Ñ2 D3.4 (marg.) ins. वैशंपायन उ°; T G वैशं°. — $^{ab}$) M (except M5) एवमुक्तो महात्माथ सुरेंद्रे°. — $^{c}$) Ñ2 B3m.6 वरैः. K2–4 भगवता (cf. v. l. $27^{a}$). — $^{d}$) K D2.5 M3 °राज्ये. B3.4 T G6 °राजेति स°. G1–4 M3.5 °षेचितः. M6–8महेंद्रेणाभिषेचितः. — After 25, D4 (marg.) T G (except G3) ins.:

511* एवं कृत्वा महेन्द्रस्तु जगाम स्वं निवेशनम् ।

26 $^{b}$) M6–8 तदा. T शक्राय. K (except K1) Ñ1.3 (*sup. lin.*) D5 G3 M जनाः. — $^{c}$) Ñ1.2 V1 D (except D5) भूमिरत्ना°. — $^{d}$) T2 G1.2.4 यथाभूता. B G2.4 ते (for वै). K3 Ñ1.2 V1 B D (except D5) तथा पूज्या (B पूता as in text) भवंति ते. — $^{e}$) Ñ3 B5m नरा दा°; B4 नानादा°; B6 (m as in text) नवा दा°; Cd as in text. — $^{f}$) N (except K1 Ñ3 D5) च (for ते). — T G1–3.6 read $27^{ef}$ after 26; T repeats it after $27^{cd}$.

27 $^{a}$) K1.3 B3.4.5m.6 D4 भगवता (cf. v. l. $25^{c}$). — $^{b}$) B Da Dn D1–4 चेदीश्वरो नृपः. K1.2.4 D5 G4.6 M3.5 तथा. — $^{d}$) B6 दिविस्थः (m as in text). — For T G1–3.6 cf. v. l. 26. — $^{e}$) B D (except D5) G3.6 M (except M5) चेदिपतिः. — $^{f}$) D3 G1.2.5.6 °मखं. T (first time) G4.5 तदा; cf. v. l. 26.

28 $^{c}$) K2m G1.3.6 M3 °राष्ट्रेषु. D5 तान्पुत्रान्; G3 च स्फीतान्; M (except M5) अपि च तान्. — $^{d}$) G3 समृद्धोभ्य°.

29 $^{a}$) T G1.3 महाराजो. Ñ3 D (except D2.3.5) मागधानां. — $^{b}$) K2 योपराजितः. — K2 reads $29^{cdef}$ in marg. (*sec. m.*). — $^{c}$) S प्रत्यग्रश्च. — $^{d}$) K0 D5 मणिपूरकम्. — $^{e}$) K0 Ñ V1 B3.5 Dn D1–4 मावेल्लः (B5m °चे°); K1 सशेलुः; K2.3 B1.6 D5 माचे° (B1m.6m °वे°); K4 Da माचेलुः; B4 मावेंद्रः; D1 मावेद्रः; T1 °ब्रह्मिः; T2 G5 °र्चि°; G2 M3 °जिह्म°; G3 यज्वलः; G4 °चें°; G6 °जि°; M6–8 °वे°. K0.3 D5 ललित्थश्च; K1 ललित्थश्च; K2 तलिच्छश्च; B4m यम° (for यदु°). For the K reading cf. Pargiter, *Ancient Ind. Hist. Trad.* p. 118. — $^{f}$) B3.6 राजा यश्चा°; D3 G (except G6) राजन्याश्चा°.

C. 1. 2365
B. 1. 63. 32
K. 1. 64. 45

न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च ।
वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः ॥ ३०
वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम् ।
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ।
राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ॥ ३१
पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः ।
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ॥ ३२
गिरिं कोलाहलं तं तु पदा वसुरताडयत् ।
निश्चक्राम नदी तेन प्रहारविवरेण सा ॥ ३३
तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम् ।
तस्माद्विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ॥ ३४
यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ।
वसुर्वसुप्रदश्चक्रे सेनापतिमरिंदमम् ।
चकार पत्नीं कन्यां तु दयितां गिरिकां नृपः ॥ ३५
वसोः पत्नी तु गिरिका कामात्काले न्यवेदयत् ।
ऋतुकालमनुप्राप्तं स्नाता पुंसवने शुचिः ॥ ३६
तदहः पितरश्चैनमूचुर्जहि मृगानिति ।
तं राजसत्तमं प्रीतास्तदा मतिमतां वरम् ॥ ३७
स पितॄणां नियोगं तमव्यतिक्रम्य पार्थिवः ।
चचार मृगयां कामी गिरिकामेव संस्मरन् ।

---

30 a) $K_2$ वस्य (m वसो) (for तस्य). T पंच (for राजन्). $G_{1.3.6}$ एते पंच सुतास्तस्य ($G_1$ °श्चास्य); M एवं पंच सुतास्तस्य. — cd) $K_4$ $D_5$ $G_{1.2.6}$ निवे°. K (except $K_1$) transp. स्वैः and ते. $\tilde{N}_3$ $T_2$ तैः (for स्वैः). $D_3$ T G देशांश्चैव ($D_3$ °श्चापि). — e) $T_2$ G (except $G_{1.3}$) चैव (for पञ्च). — f) S सर्वे वंशकराः पृथक्.

31 a) K (except $K_1$) $D_{2.5}$ वसुं तं; $M_5$ एवं तं (for वसन्तं). $G_{1.3}$ $M_{3.6-8}$ एवमिंद्रप्रसादात्तं. — b) $D_5$ °केथवा; $G_{1.3}$ °कं रथं. K स्थि($K_1$ श)तं; T नृपं; $G_{2.6}$ रथे; $G_{4.5}$ रतं (for च तम्). M आकाशस्फाटिके रतं. — e) K एतत् (for एवं). — f) K $D_5$ °स्याभिविश्रुतं; $\tilde{N}_3$ °स्य परिश्रुतं. S अवोचन्पार्थिवा नृपं ($G_2$ °र्थिवर्षभं).

32 b) M शुप्तिमतीं.

33 a) Da गिरिको°. — c) $\tilde{N}_2$ $V_1$ B D (except $D_5$) ततः; $T_1$ मही (for नदी). T G (except $G_{1.3}$) तत्र ($G_6$ °स्य) (for तेन).

34 b) $T_1$ $G_{1.3}$ °तद्वयं. — $G_1$ om. $34^{c}$–$35^{b}$. — c) $\tilde{N}_{1.2}$ $V_1$ B Da $D_{1.3.4}$ तस्सा (for तस्माद्). — $T_2$ $G_{2.4-6}$ ins. after 34: $T_1$, after $35^{ab}$:

512* महिषी भविता कन्या पौष्यः सेनापतिर्भवेत् ।
शुक्तिमत्या वचः श्रुत्वा दृष्ट्वा तौ राजसत्तमः ।

35 $G_1$ om. $35^{ab}$ (cf. v. l. 34). — b) K (except $K_1$) transp. तं and स. After $35^{ab}$, $T_1$ ins. 512* (cf. v. l. 34). — d) A few MSS. °दमः. — e) T तां कन्यां (for कन्यां तु). $G_{1.2.5}$ तां (for तु). — f) K (except $K_1$) transp. दयि° and गिरि°. D (except $D_{2.5}$) तथा तां (for दयि°).

36 b) Dn $D_{1.4}$ $T_1$ कामकालं ($T_1$ °ले); $D_3$ ऋतुकाले. — c) $K_3$ Ñ $V_1$ $B_{4.5}$ D (except Da) $T_2$ $G_{1-4.6}$ $M_{3.5}$ °प्राप्ता. $G_5$ ऋतुकाले तु संप्राप्ते. — d) = 1. 27. $25^{b}$. $T_2$ G (except $G_{1.3}$) काले पुं°.

37 a) $K_1$ M (except $M_3$) तदहं. — c) G (except $G_{4.5}$) श्रुत्वा पितृवचः प्रीतः. — d) Some MSS. वरः and वर.

38 a) T $G_{4.5}$ नियोगेन. — b) $B_1$ $D_2$ न ह्यति°; Da अभ्यति°; Dn $D_1$ $G_{3.6}$ M अनति°; $T_1$ $G_{4.5}$ तामति°; $T_2$ तमसं°. — c) $\tilde{N}_2$ $V_1$ B (except $B_6$) $D_4$ $T_1$ चकार. — Dn T $G_{2.4-6}$ ins. after $38^{cd}$: $G_1$, after 38:

513* अशोकैश्चम्पकैश्चूतैस्तिलकैरतिमुक्तकैः ।
पुंनागैः कर्णिकारैश्च बकुलैर्दिव्यपादपैः ।
पनसैर्नारिकेलैश्च चन्दनैश्चार्जुनैस्तथा ।
एतैरन्यैर्महावृक्षैः पुण्यैः स्वादुफलैर्युतम् ।
कोकिलाकुलसंनादं मत्तभ्रमरनादितम् । [5]
वसन्तकाले तत्पश्यन्वनं चैत्ररथोपमम् ।
मन्मथाभिपरीतात्मा नापश्यद्गिरिकां तदा ।
अपश्यत्कामसंतप्तश्चरमाणो यदृच्छया ।
पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितम् ।
अशोकस्तबकैश्छन्नं रमणीयं तदा नृपः । [10]
तरोरधस्तात्छायायां सुखासीनो नराधिपः ।
मधुगन्धैश्च संपृक्तं पुष्पगन्धं मनोरमम् ।
वायुना प्रेर्यमाणं तमाघ्राय मुदमन्वगात् ।

[ (L. 1) Dn $T_1$ अनेकैर् (for तिलकैर्). — (L. 2) Dn बकुलैर्. Dn T °पाटलैः (for °पादपैः). — (L. 3) Dn T पाटलैर् (for पनसैर्). — (L. 4) Dn रम्यैः (for अन्यैः). — (L. 6) Dn तत्तस्य (for तत्पश्यन्). — (L. 8) Dn अपश्यन्. — (L. 10) Dn अशोकं स्त°. Dn T °थमपश्यत. — (L. 11) Dn अधस्तात्तस्य छायायां. — (L. 12) Dn संयुक्तं (for संपृ°). Dn T गंधमनोहरं (T °रमं). — (L. 13) Dn °माणस्तु घ्राय. — After 513*, $T_2$ $G_6$ repeat $38^{cd}$; while $G_1$ repeats $38^{ef}$: a sure indication that the passage is an interpolation. ]

अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ॥ ३८
तस्य रेतः प्रचस्कन्द चरतो रुचिरे वने ।
स्कन्नमात्रं च तद्रेतो वृक्षपत्रेण भूमिपः ॥ ३९
प्रतिजग्राह मिथ्या मे न स्कंदेद्रेत इत्युत ।
ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ॥ ४०
संचिन्त्यैवं तदा राजा विचार्य च पुनः पुनः ।
अमोघत्वं च विज्ञाय रेतसो राजसत्तमः ॥ ४१
शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य सः ।
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम् ।
सूक्ष्मधर्मार्थतत्त्वज्ञो ज्ञात्वा श्येनं ततोऽब्रवीत् ॥ ४२
मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ।
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै ॥ ४३
गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् ।
जवं परममास्थाय प्रदुद्राव विहंगमः ॥ ४४
तमपश्यदथायान्तं श्येनं श्येनस्तथापरः ।
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ॥ ४५
तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः ।
युध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि ॥ ४६
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता बभूव यमुनाचरी ॥ ४७
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ।
जग्राह तरसोपेत्य साद्रिका मत्स्यरूपिणी ॥ ४८
कदाचिदथ मत्सीं तां बबन्धुर्मत्स्यजीविनः ।
मासे च दशमे प्राप्ते तदा भरतसत्तम ।
उज्जह्रुरुदरात्तस्याः स्त्रीपुमांसं च मानुषम् ॥ ४९
आश्चर्यभूतं मत्वा तद्राज्ञस्ते प्रत्यवेदयन् ।

C. 1. 2391
B. 1. 63. 62
K. 1. 64. 77

— D4 T G2.4.5 ins. after 38$^{ef}$: G1, after the repetition of 38$^{ef}$:

514* भार्यां चिन्तयमानस्य मन्मथाग्निरवर्धत ।

39 $^{b}$) Ñ2 V1 B D (except D5) °तो गहने. K3 चरतो न भवेदिति; T1 द्विविधा चैव शोभितः. — After 39$^{ab}$, T1 ins.:

515* तद्रेतश्चापि तत्रैव प्रतिजग्राह भूमिपः ।

— K3 om. 39$^{c}$–40$^{b}$. — $^{c}$) G (except G1.3) °मात्रेण (om. च). K (K3 om.) B1 M5 तु (for च). — $^{d}$) G (except G1.3) °पर्णेन; M5 वटप°; M6–8 ह्यर्कप°.

40 K3 om. 40$^{ab}$ (cf. v. l. 39). — $^{b}$) Dn D3 पतेद् (for स्कंदेद्). After 40$^{ab}$, K (except K3) Dn D1 ins.:

516* इदं वृथा परिस्कन्नं रेतो वै न भवेदिति ।
[ Dn D1 मिथ्या (for वृथा) and मे (for वै). ]

After 40$^{ab}$, T G1 ins.:

517* अङ्गुलीयेन शुक्रस्य रक्षां प्रविदधे नृपः ।
अशोकस्तबकैस्ताम्रैः पल्लवैश्चाप्यबन्धयत् ।
इदं वृथैव स्कन्नं मे रेतः स सुमहान्वधः ।

With the last line cf. 516*. — $^{c}$) K (except K1) T G1.3 transp. तस्याः and पत्न्याः.

41 $^{a}$) K2 D4 G (except G3) M3 एव (for एवं). K1 M6–8 ततो (for °दा). — $^{d}$) Ñ3 S तेजसो रा°.

42 $^{a}$) Here and in the foll. st. S (mostly) शुक्ल- for शुक्र-. — $^{b}$) Ñ1.2 V1 D (except D5) वै; Ñ3 S च (G3 तु) (for सः). — $^{c}$) B1.3.6 S (except G1–4) आशु; B4.5 D4 स (for अथ). — $^{f}$) Ñ2 B4–6 D (except D2.3.5) गत्वा (for ज्ञा°). K D5 अथ (for ततः).

43 Before 43, B3 D4 (marg.) ins. वसुरुवाच. — $^{b}$) K D5 गृहान्. T1 मच्छुक्रं मद्गृहं नय. — $^{c}$) K Ñ1 D5 G4.5 गिरिकायै.

44 Before 44, B3 D4 (marg.) ins. वैशंपायन उ° (cf. v. l. 43). — $^{a}$) Da B3.5 तु (for तत्). K3 D5 G2.3 तथा (for °दा). T इत्याज्ञसस्तु तं गृह्य. — $^{b}$) G1.4.5 उत्प्लुत्य. — $^{c}$) G4–6 M (except M3) वेगं. K (except K1) परं जवं समा°.

45 $^{a}$) Ñ3 T G3 तदा; G1.2.4–6 M तथा (for अथ). — G5 om. 45$^{c}$–47$^{b}$. — $^{c}$) D5 °च्च संहृष्टो. — $^{d}$) Ñ3 °षकांक्षया.

46 G5 om. 46 (cf. v. l. 45). — $^{a}$) G2.3 वल्गुयुद्धं. — $^{c}$) M6–8 °तो ह्यपतद्. — $^{d}$) T1 °नाजले.

47 G5 om. 47$^{ab}$ (cf. v. l. 45). — $^{a}$) G6 M3 तदा (for तत्र). T °केत्यभि°. G1 तदाद्रिकेत्यभिमता; G2.4 अद्रिकेत्यभि°; G3 M5–8 तदाद्रि(M5 °द्रि)केत्यभिख्या(G3 °श्री)ता. — $^{b}$) K0.4 D3 G1.3.4 M6–8 °प्सरा. — $^{c}$) T1 मत्स्यभाव°.

48 $^{c}$) M3.5.8 जग्रास. Da D2 T2 (*inf. lin.*) G6 °सोत्पत्य. — $^{d}$) K1 अश्रिका; M6–8 सादिका (sic); cf. v. l. 47.

49 $^{a}$) Ñ1.2 V1 D (except D2.4.5) °चिदपि; Ñ3 °च्चिरवथ. K1 B4 T1 G (except G3) मत्स्यां. — $^{b}$) S °घातिनः. — $^{c}$) K Ñ3 D5 [ऽ]थ; G2 ह्रा- (for च). — $^{d}$) D3.4 G (except G3) भारत°. — $^{e}$) K1 B5

C. 1. 2392
B. 1. 63. 62
K. 1. 64. 77

काये मत्स्या इमौ राजन्संभूतौ मानुषाविति ॥ ५०
तयोः पुमांसं जग्राह राजोपरिचरस्तदा ।
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसंगरः ॥ ५१
साप्सरा मुक्तशापा च क्षणेन समपद्यत ।
पुरोक्ता या भगवता तिर्यग्योनिगता शुभे ।
मानुषौ जनयित्वा त्वं शापमोक्षवाप्स्यसि ॥ ५२
ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिना ।
संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ।
सिद्धर्षिचारणपथं जगामाथ वराप्सराः ॥ ५३
या कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ।
राज्ञा दत्ताथ दाशाय इयं तव भवत्विति ।
रूपसत्त्वसमायुक्ता सर्वैः समुदिता गुणैः ॥ ५४
सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् ।
आसीन्मत्स्यसगन्धैव कंचित्कालं शुचिस्मिता ॥ ५५
शुश्रूषार्थं पितुर्नावं तां तु वाहयतीं जले ।
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ॥ ५६
अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम् ।
दृष्ट्वैव च स तान्धीमांश्चकमे चारुदर्शनाम् ।
विद्वांस्तां वासवीं कन्यां कार्यवान्मुनिपुंगवः ॥ ५७
साब्रवीत्पश्य भगवन्पारावारे ऋषीन्स्थितान् ।

---

आजह्रुः; Cd as in text. G$_3$ corrupt. — $^f$) Ñ V$_1$ Dn$_3$ D$_5$ M$_7$ स्त्रीं पु°. K$_{0.2-4}$ D$_5$ अ- (for च). Ñ$_2$ B D$_2$ स्त्री(B$_{5.6}$ स्त्रीं)पुंसमथ मा°; Ñ$_3$ T G स्त्रीपुमांसौ च (Ñ$_3$ स्म; G$_3$ चैव) मानुषौ. K$_1$ ins. न before च, and a प is erased between न and च.

50 $^a$) Ñ$_1$ V$_1$ Dn D$_1$ तद्गत्वा; Ñ$_2$ B Da D$_{2-4}$ तज्ज्ञात्वा; Ñ$_3$ मत्वा तं; G$_{1.3}$ मत्वाथ; M$_5$ तं मत्वा. D$_5$ अत्याश्चर्यतमं मत्वा. — $^b$) K$_1$ (before corr.) राज्ञे ते; Ñ$_{1.2}$ V$_1$ B D (except D$_{2-5}$) राज्ञेथ; Ñ$_3$ राज्ञस्तत्; G$_{1.3}$ तद्राज्ञे. — $^c$) T$_1$ transp. काये and मत्स्याः. G$_3$ मत्स्यात् (for मत्स्याः). D$_5$ मत्स्यकायादिमौ राजन्; G$_{1.2.4.5}$ कथं मत्स्यादिमौ राजन् (G$_1$ जातौ); G$_6$ कायान्मात्स्यादिमौ राजन्. — $^d$) G$_1$ हे राजन्मानु°.

51 T$_2$ om. 51–52. — $^b$) M$_{6-8}$ °चरः स्वयं. — $^c$) G (except G$_1$) मात्स्यो (for म°). G$_3$ राज एवासीत्.

52 T$_2$ om. 52 (cf. v. l. 51). — $^c$) Ñ$_{1.2}$ V$_1$ B$_6$ D (except D$_{2.4.5}$) transp. पुरो° and या. S (except M$_{3.5}$; T$_2$ om.) सा (for या). — $^d$) K$_{2.4}$ D$_5$ °ता सती; Ñ$_1$ B$_6$ Dn D$_{1.4}$ °ता शुभा; S (except M$_3$; T$_2$ om.) °ताशु वै. — $^{ef}$) K$_1$ D$_3$ T$_1$ मानुषं. S (T$_2$ om.) तु (for त्वं). Ñ$_1$ S (T$_2$ om.) मुक्तशापा भविष्यसि. Ñ$_3$ जनयिष्यत्यपत्यं ते स्त्रीपुमांसौ तु भामिनि.

53 $^a$) Ñ$_3$ एतस्मात्; D$_5$ अतः सा; T M$_{3.5}$ अतः सं-; G$_{1.4-6}$ सुतौ सं-; G$_{2.3}$ M$_{6-8}$ अथ सं-. S सा (G$_{4.5}$ तु) (for तौ). — $^b$) S °घातिभिः. — $^c$) V$_1$ तं; B तत (B$_6$ तु) (for सा). — $^d$) MSS. indiscriminately दिव्य- and दिव्यं. K$_1$ °व्यं देहम°. — $^e$) K$_1$ T$_1$ G$_{3.6}$ °णपदं. — $^f$) MSS. indiscriminately °प्सरा and °प्सराः.

54 $^{ab}$) Ñ$_2$ B$_6$ D (except D$_{2.5}$) सा (for या). K$_1$ D$_5$ transp. तस्याः and मत्स्याः. S (except G$_{1-3}$) म(G$_{4.5}$ मा)त्स्याः (for तस्याः). G$_3$ सासीन् (for मत्स्याः). Da मत्स्यगंधा वरानना; D$_3$ तस्या मत्स्यसुगंधिनी; T G$_{1.2.4-6}$ M सा तस्या (T$_1$ च सौ; T$_2$ कन्या; G$_{1.2.6}$ चासीन्; M$_5$ नु स्यान्; M$_8$ तु सा) मत्स्यगंधिनी. — $^c$) Ñ$_{1.2}$ V$_1$ D (except D$_5$) M$_3$ च (for अथ). N (mostly) दासाय. — $^d$) V$_1$ B$_6$ Dn D$_{1.4}$ कन्येयं ते; T$_1$ G$_{3.6}$ सुतेयं ते. G$_3$ भविष्यति. — $^e$) K$_3$ Ñ$_3$ S सा तु (K$_3$ Ñ$_3$ M$_6$ सत्व-; G$_3$ सत्य-) रूप°; B$_5$ रूपसंपत्°.

55 $^a$) Ñ$_3$ गंधवती. — $^b$) K$_{0.2.3}$ Ñ$_1$ °घाताभि-; K$_1$ °घातिनि; K$_4$ °जात्याभि-; B$_3$ D$_{3.4}$ G$_{1.3.4.5}$ °जात्यभि-; G$_3$ °वत्यपि; G$_6$ °गात्राभि-. Da °संश्रया. Ñ$_3$ °घाताभिसंश्रया. — $^c$) T$_1$ M$_{3.5}$ तस्मिन्मत्स्य°. Dn D$_1$ G$_3$ सा मत्स्यगंधैव; D$_{3.5}$ °सुगंधैव; G$_{4.5}$ °सगंधेव. — $^d$) K$_{0.2}$ Da G$_{2.3}$ किंचित्. — After 55, D$_3$ G$_{1-3}$ read an additional colophon, with the following details. *Adhy. name:* G$_1$ सत्यवत्युद्भवः. *Adhy. no.:* D$_3$ 62; G$_{1-3}$ 5 (of संभवपर्व).

56 Before 56, D$_3$ ins. वैशंपायन उ°; T G$_{1-3}$ वैशं° (cf. v. l. 55). — $^b$) Ñ$_{1.2}$ V$_1$ B D (except D$_5$) वाहयंतीं जले च तां.

57 $^d$) Ñ$_2$ V$_1$ B D चारुहासिनीं. — $^e$) Ñ$_1$ ज्ञात्वा; Ñ$_2$ V$_1$ B D (except D$_{2.3.5}$) दिव्यां; G$_3$ बुध्वा (for विद्वान्). — $^f$) Ñ$_{1.2}$ V$_1$ B D (except D$_{3.5}$) रंभोरुं. D$_3$ T$_1$ G$_{2.3}$ उपमंत्रयत् (for मुनि°). — After 57, K$_{0.3.4}$ Ñ$_2$ V$_1$ B D ins. (D$_4$ ins. after the passage No. 35 in App. I; D$_5$, ins. after line 52 of that passage):

518* संगमं मम कल्याणि कुरुष्वेत्यभ्यभाषत ।

— After 57, D$_{3.4}$ (om. line 53) T$_2$ G ins. a passage of 53 lines given in App. I (No. 35).

58 $^b$). D$_3$ T G$_{2.4-6}$ परे पारे; G$_1$ M$_3$ परपारे; M$_3$

आवयोर्दृश्यतोरेभिः कथं नु स्यात्समागमः ॥ ५८

एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः ।
येन देशः स सर्वस्तु तमोभूत इवाभवत् ॥ ५९

दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ।
विस्मिता चाब्रवीत्कन्या व्रीडिता च मनस्विनी ॥ ६०

विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ।
त्वत्संयोगाच्च दुष्येत कन्याभावो ममानघ ॥ ६१

कन्यात्वे दूषिते चापि कथं शक्ष्ये द्विजोत्तम ।
गन्तुं गृहं गृहे चाहं धीमन्न स्थातुमुत्सहे ।
एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥ ६२

एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः ।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ॥ ६३

वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि ।
वृथा हि न प्रसादो मे भूतपूर्वः शुचिस्मिते ॥ ६४

एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ।
स चास्यै भगवान्प्रादान्मनसः काङ्क्षितं प्रभुः ॥ ६५

ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता ।
जगाम सह संसर्गमृषिणाद्भुतकर्मणा ॥ ६६

तेन गन्धवतीत्येव नामास्याः प्रथितं भुवि ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ॥ ६७

ततो योजनगन्धेति तस्या नाम परिश्रुतम् ।
पराशरोऽपि भगवाञ्जगाम स्वं निवेशनम् ॥ ६८

इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् ।
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ।

C. 1. 2413
B. 1. 63. 94
K. 1. 64. 123

---

पारे पारे. K0 °वारं ऋ° (sic); K1 °वरमृ°; K2 परावरमृ°; K3 Ñ3 B D1.2.5 °वारमृ°; K4 °वारानृ°. Ñ1.2 V1 Da Dn D3.4 T M6-8 transp. ऋषीन् and स्थितान्. M6 ऋषीनिमान्. G3 द्वारस्थान्परमेष्ठिनः. — cd) Ñ V1 B D (except D5) दृष्ट्योर्; G3 दृश्ययोर्. B3 D2.3 तु (for नु). G1.2.4-6 आवयोश्च कथं ब्रह्मन्भविष्यति स°.

59 Before 59, Ñ1.2 B2 ins. वैशंपायन उ°. — a) Ñ3 °वं तदा स. — b) K D6 ततः (K3 °दा); D2 मुनिः; G3.6 विभुः (for प्रभुः). — c) M तेन (for ये°). T2 G3.6 येनैव देशः स°. — d) Ñ2 B1.5 S (except T G3) तमोवृत.

60 b) D3 G2.3 सद्यस्त°. — c) K0 T सा; G1.4.6 M अथ (for च). K1 Ñ1.2 V1 B D (D6 corrupt) सा (K1 चा)भवत्; G2.3.6 [ऽ]भूत्तदा (G3 °तः). — d) K4 Ñ1.2 V1 B D M3 तप° (D3.5 as in text; D4 यश°) (for मन°). G2 °ता ईषदब्रवीत्; G3 °ता ऋषिमब्रवीत्; G6 °ता त्विदमब्रवीत्.

61 Before 61, Ñ1.2 B (B6 marg.) D (except D2.5) ins. सत्यवत्युवाच. — b) T1 न्यायात्; G1 मुग्धां (for सदा).

62 a) K0-2 Dn1.n3 वापि; G (except G3) चाहं. — b) K1 B1 (m as in text).3 D1 शक्ये; K2.4 स्यां वै; Ñ2 B4.5 °क्यं; Ñ3 °क्या; V1 °क्यो. — c) Ñ V1 B1 Dn D1.4 transp. गन्तुं and गृहं. K0 गंतुं स्वा स्वे; B3-6 गृहान्गन्तुं; Da1 G2 गन्तुं गृहे; Da2 गृहानां तु; D3 गृहे गन्तुं; D5 गन्तुं पितृ-; G3 गन्तुं न स्व-. K2-4 गन्तुं वा स्वगृहे (K2 °हं). Ñ3 सदा; V1 Dn D1 रूपे (for गृहे). B1 वाहं; D3 S चापि (T2 G1.2.4.5 वापि) (for चाहं). — d) D1 G2 धीमाना-; T2 अहं न; G3 अनहां; G4 धीमन्ना-; G6 अहं ना-; M6-8 भीता न. — e) K (except K1) Ñ3 एवं सं°. — K1 (hapl.) om. from 62f up to व (in $64^{a}$).

63 K1 om. 63 (cf. v. l. 62). — d) G (except G2.3) पुनः कन्या भ°.

64 K1 om. up to व (cf. v. l. 62). — a) G (except G2.3) भद्रे (for भीरु). — b) G2 M5 ईप्ससि. B Da2 Dn भाविनि. — After 64, G3 repeats lines 40–44 of passage No. 35 given in App. I.

65 Before 65, B3 ins. वैशंपायन उ°; G3 वैशं. — b) G3 °सौभाग्यम्. — cd) G1.2.4-6 वरदः (for भग°). D4 M5 मनसा; G1.2.4-6 भगवान्; M3 वरं वै. Da2 Dn शुचि; T2 inf. lin. वरं (for प्र°). G3 अददात्तं वरं चास्यै यथावत्पुण्यकर्मकृत्.

66 After 66ab, G (except G3.6) ins.:

519* लज्जानतमुखी भूत्वा मुनेरभ्याशमागता ।

— c) G2 सहसा सम्यक्.

67 a) Ñ1.2 V1 B3 D (except D2.3.5) एवं (for °व). — Da om. 67cd. — d) K2.4 Ñ1.2 V1 B D (except D3.5; Da om.) आजिघ्रंत. K (except K1) नरा यतः.

68 a) K Ñ3 D6 अतो; B1.3.5.6 Da Dn D1-3 तस्याः; B4 D4 तस्मात्. — b) K D1.5 transp. तस्याः and नाम. Ñ3 प्रनिश्चितं; D5 परं स्मृतं; G1 पि न श्रुतं. Ñ2 V1 B Da Dn D1-3 ततो नामापरं स्मृतं; G2.3 द्वितीयं नाम ते (G2 चि-) श्रुतं. — After $68^{ab}$, D3 T2 G (except G6) ins. a passage of 97 lines given in App. I (No. 36). — T2 G om. $68^{cd}$ (cf. App. I, No. 38, 39, lines 2 and 1 respectively). — c) Ñ1 °पि धर्मात्मा. — d) T1 °म ब्रह्मणोत्तिकं.

69 Before 69, G3 ins. वैशं. — a) T1 मया; T2 G

C. 1. 2411
B. 1. 63. 84
K. 1. 64. 120

जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥ ६९
स मातरमुपस्थाय तपस्येव मनो दधे ।
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥७०
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।
द्वीपे न्यस्तः स यद्बालस्तस्माद्द्वैपायनोऽभवत् ॥ ७१
पादापसारिणं धर्मं विद्वान्स तु युगे युगे ।
आयुः शक्तिं च मर्त्यानां युगानुगमवेक्ष्य च ॥ ७२
ब्रह्मणो ब्राह्मणानां च तथानुग्रहकाम्यया ।
विव्यास वेदान्यस्माच्च तस्माद्व्यास इति स्मृतः ॥७३
वेदानध्यापयामास महाभारतपञ्चमान् ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥ ७४
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः ॥ ७५
तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।
वसुवीर्यात्समभवन्महावीर्यो महायशाः ॥ ७६
शूले प्रोतः पुराणर्षिरचोरश्चोरशङ्कया ।
अणीमाण्डव्य इति वै विख्यातः सुमहायशाः ॥७७
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ।
इषीकया मया बाल्यादेका विद्धा शकुन्तिका ॥ ७८
तत्किल्बिषं स्मरे धर्म नान्यत्पापमहं स्मरे ।
तन्मे सहस्रसमितं कस्मान्नेहाजयत्तपः ॥ ७९
गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः ।
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि ॥ ८०
तेन शापेन धर्मोऽपि शूद्रयोनावजायत ।

---

एवं (for इति). — K2 om. 69$^{cd}$. — $^{b}$) T1 लब्ध्वा भरतसत्तम; T2 G पूजां लब्ध्वा (T2 G3 कृत्वा) यथेष्टतः. — $^{c}$) K2 संयोगात्. — $^{d}$) D3.5 G1-3 अवाप (for सुषा°). — After 69, D3 T2 G ins. a passage of 44 lines given in App. I (No. 37), while T1 ins. only the first line thereof.

70 D3 T2 G transp. 70$^{ab}$ and 70$^{cd}$. — $^{a}$) Dn D3 T2 G °तरमनुज्ञाप्य. — After 70, D3 T2 G ins. a passage of 7 lines given in App. I (No. 38).

71 D1 om. 71$^{ab}$. — $^{c}$) Ñ1.2 V1 Dn D1 transp. द्वीपे and न्य°. K2.4 तया बालः; D2 तयाज्ञानात्. — $^{d}$) K1 Ñ2 V1 B D (except D3.5) °नः स्मृतः.

72 T1 om. 72$^{ab}$. — $^{a}$) K0 Ñ3 B1 (m as in text).4.5 m.6 G6 M3 पादाव°; K1 पद्दानु°; K2 पादाघ°; G1-5 पाद्दानु°; Cd as in text. — $^{b}$) Ñ1.3 V1 B D (except D3.5) transp. विद्वान् and स तु. K0.2.4 बुध्वा; K3 दृष्ट्वा; D5 तत्र (for स तु). — $^{c}$) B1 अल्पमायुश्च (m as in text). — $^{d}$) K (except K1) V1 D3.5 युगावस्थाम्; Ñ2 युगांतं सम्-; Ñ3 Dn2 °युगम्; S °द्युगम्. B1.3.6 Da D1.4 ह (for च).

73 $^{a}$) Ñ V1 Da1 Dn2 D2 M3.5 ब्राह्मणो; B1m वेदस्य; D3 G ब्रह्मर्षिः (G1.2 °र्षि-). T1 M हि (for च). — $^{b}$) M6-8 तदा. Ñ V1 B D (except D5) T M °कांक्षया. — $^{c}$) Ñ V1 B D (except D3) स (for च). — $^{d}$) K4 तेन; D3 G1.3 वेद- (for तस्माद्). — After 73, D3 T G ins.:

520* ततः स महर्षिर्विद्वाञ्शिष्यानाहूय धर्मतः ।
[ T2 ततो महर्षिर्विद्वान्स. G4-6 °य धर्मवित्. ]

74 D3 T G read 74$^{ab}$ after 75$^{ab}$.

75 $^{cd}$) G2.4.5 समाहितैः पृ° भारतं च. K0.3 D3 S प्रकीर्तिताः (G2.4.5 °तं). — After 75, D3 T2 G ins. a passage of 13 lines (ending with a *phalaśruti*!) given in App. I (No. 39), which is followed by a colophon in D3 T2 G1-3.6. Details of the colophons.— *Adhy. name:* G1 व्याससंभवः; G6 व्यासोत्पत्तिः. *Adhy. no.:* D3 63; T2 G6 5 and G1-3 6 (of संभवपर्व).

76 Before 76, K1 D3 T2 G ins. वैशंपायनः (cf. v. l. 75). — $^{a}$) M (except M5) ततो (for °था). — $^{b}$) D5 °र्यां च महा°. — $^{c}$) B1 °स्समुत्पन्नो. — After 76, Ñ1.2 V1 B (B3 marg.) D (except D5) ins.:

521* वेदार्थविच्च भगवानृषिर्विप्रो महायशाः ।
[ B4 repeats the line with स कदाचित्तु for वेदा°. ]

77 K3 om. 77. — $^{b}$) N (mostly) चौर- for चोर- (both times). — $^{c}$) K1 आणी°; K4 Da1 T1 अणि°; T2 G M आणि°. K1 इति यो; Ñ1.2 V1 B D (except D5) इत्येवं. — $^{d}$) K4 Ñ3 Da1 Dn D4.6 G3 स (for सु-).

78 $^{a}$) T धर्ममाहूय स पुरा. Nilp आहूय. — Before 78$^{c}$, B3 ins. माण्डव्य उ°. — $^{d}$) Ñ1.2 V1 B D विद्धा ह्येका. Ñ3 V1 B (except B4) Da1 D4 तु झि(Da1 रु)ल्लिका; D3 तु मक्षिका.

79 $^{a}$) G4-6 transp. तत् and कि°. K4 G6 भवेत् (for स्मरे). — $^{b}$) D3 मया (for अहं). Da D1.3.4 कृतं (for स्मरे). — $^{c}$) K1 Ñ V1 B3.5.6 Dn D2.3.5 T G1.3 °स्रममितं; M °स्रगुणितं.

80 $^{b}$) D5 °वधोपमः; M3.5 °वधादपि. — $^{c}$) D (except D2.5) °ल्बिषी धर्म. — $^{d}$) T1 (hapl.) om. from

विद्वान्विदुररूपेण धार्मी तनुरकिल्बिपी ॥ ८१
संजयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् ।
सूर्याच्च कुन्तिकन्यायां जज्ञे कर्णो महारथः ।
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ॥ ८२
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥ ८३
अनादिनिधनो देवः स कर्ता जगतः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं निर्गुणात्मकम् ॥ ८४
आत्मानमव्ययं चैव प्रकृतिं प्रभवं परम् ।
पुरुषं विश्वकर्माणं सत्त्वयोगं ध्रुवाक्षरम् ॥ ८५
अनन्तमचलं देवं हंसं नारायणं प्रभुम् ।
धातारमजरं नित्यं तमाहुः परमव्ययम् ॥ ८६

पुरुषः स विभुः कर्ता सर्वभूतपितामहः ।
धर्मसंवर्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ॥ ८७
अस्त्रज्ञौ तु महावीर्यौ सर्वशस्त्रविशारदौ ।
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ ।
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ॥ ८८
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत ।
महर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत ॥ ८९
गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ।
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः ।
अश्वत्थामा ततो जज्ञे द्रोणादस्त्रभृतां वरः ॥ ९०
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः ।
वैताने कर्मणि तते पावकात्समजायत ।

C. 1. 2467
B. 1. 63. 109
K. 1. 64. 151

---

ज° up to °योनौ ($81^{b}$). Ko. 2 D3. 3 गमि°; T2 G6 भवि°.

81 T1 om. up to °योनौ (cf. v. l. 80). — Before 81, Ñ2 B6 ins. वैशंपायन उ°. — $^{a}$) T2 G (except G1. 6) पापेन (for शा°). — $^{d}$) B4 धर्मसूनुर्. T G धार्मिकः किल्बिपात्ततः; M (except M5) धर्मो विग्रहवानिव.

82 $^{b}$) G1-3 जज्ञे गावल्गणात्ततः. — $^{c}$) G1. 6 °याँत्कुंत्यां च (G6 हि). T G3. 4-6 कुंत्यां (for कुन्ति-). Cd (corrupt) probably as in text. — $^{d}$) D (except D2. 4. 5) महाबलः. — $^{f}$) D8 G (except G4. 5) °ल्द्यो°.

83 $^{e}$) S स (G1-3 च) (for तु).

84 $^{a}$) M (except M5) °नं देवं. — $^{b}$) K2 D5 M8 न कृतः (for ज°); cf. 522* below. Ko. 3. 4 सर्वकृत् (K3 °ज्ञः) सर्वेदः प्र°; K2 m संहर्ता परमप्र°; Ñ3 कर्ता हर्ता जगत्प्र°; T G4-6 साक्षाल्लोकेश्वरः प्र°; G1. 2 सर्वकर्ता जगत्प्र°; M3 कर्तारमकृतं प्रभुं; M6-8 संहर्तारमृषिं प्रभुं. — T G2. 4-6 ins. after $84^{ab}$: G1, after 84:

522* आदेरादिः समस्तानां स कर्ता न कृतः प्रभुः ।

[ T2 स कृतः; G2 नः कृतिः; G4 नः कृतः (for न कृतः). T1 सत्कर्ता सत्कृतिः सदा; G1 साक्षाल्लोकेश्वरः प्रभुः. ]
— $^{d}$) Ñ1. 2 V1 B D (except D5) °नं त्रिगु°.

85 $^{b}$) K2-4 Da D2 प्रकृति-; T G प्रकृतेः. B4. 5 D (except D2. 5) प्रभुं (for परम्). — $^{c}$) M6-8 °कर्तारं. — $^{d}$) K1 Ñ1 B4. 5 Da D5 Cd सत्व(Ñ1 °र्वं)योग-; S (except G8 M8) सत्य°. Ko. 2-4 विश्वरूपं क्ष(Ko प)राक्षरं; Ñ3 V1 B1. 3. 6 D3 °योगबलाश्रयं.

86 $^{a}$) K1 °तमव्ययं; G4. 5 °ततरूपं तं. S (except G1) मेरुं (for देवं). — $^{b}$) Ko. 3 हरिं; Cd हंसं (as in text). — $^{c}$) Ñ1 अजितं; T1 अचलं; G6 अचरं. K B4 अजम(B4 m अव्रह)व्यक्तं; Ñ2 V1 B5 Dn D1. 3-5 अजमव्यक्तं. Ñ1. 3 B1. 3. 6 D2 दिव्यं; Da व्यक्तं (for नित्यं). — $^{d}$) Ñ2 V1 B D (except D5) G4. 6 यं (for तं). K (except K1) परमं पदं. G1 आहुः परममव्ययं. — After 86, Ko. 3. 4 Ñ V1 B D (except D5) ins.:

523* कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम् ।

87 $^{b}$) Ñ3 G1. 3 °र्वलोक°. — After $87^{ab}$, K (except K3) D2 repeat 1. 1. $196^{cd}$ (v. l. भगवान्हरिः for परि°). — $^{c}$) Ñ1. 3 S °संस्थाप° (= Gītā, 4. $8^{c}$). — $^{d}$) G4. 5 जज्ञे सः (for प्रजज्ञे).

88 $^{a}$) K (except K1) च (for तु). — $^{b}$) N (except Ko) G2 M6. 7 सर्वशास्त्र°; G1. 3 धर्मशास्त्र°. — After $88^{ab}$, D5 ins. (the foll. derivation of आत्मन्, excerpted, with v. l., from Devabodha's comm. *ad* 85):

524* यदाप्नोति यदादत्ते यच्चाति विषयाणि च ।
यच्चास्य सततो भावस्तस्मादात्मेति कीर्त्यते ।

— T1 om. $88^{cdef}$. — $^{f}$) Ñ1. 3 S (T1 om.) °तेर्थ-. K Ñ1. 3 D5 °विदावुभौ (K2 *sup. lin.* as in text); Ñ2 V1 B D2 °विदां वरौ. — After 88, K2 marg. ins.:

525* हृदिकः कृतवर्मा च युयुधानस्तु सात्यकिः ।

89 $^{ab}$) K1 D2. 8 G2. 4 भार°. Ñ3 transp. स्कन्नं and द्रोण्यां. — $^{d}$) K3 Ñ2 V1 B (except B1) तस्मिन् (for °स्मात्). K1. 3. 4 °णो[ऽ]स्य°.

90 D1 (hapl.) om. $90^{cd}$. — $^{c}$) K3 G1. 2 M6-8 तु (for च). — $^{d}$) G4-6 महारथः. — $^{f}$) K1 शस्त्रभृतां; Ñ1

C. 1. 2436
B. 1. 63. 109
K. 1. 64. 151.

वीरो द्रोणविनाशाय धनुषा सह वीर्यवान् ॥ ९१
तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ॥ ९२
प्रह्रादशिष्यो नग्नजित्सुबलश्चाभवत्ततः ।
तस्य प्रजा धर्महन्त्री जज्ञे देवप्रकोपनात् ॥ ९३
गान्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा ।
दुर्योधनस्य माता च जज्ञातेऽर्थविदावुभौ ॥ ९४
कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः ।
क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ॥ ९५
पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् ।
द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ॥ ९६
धर्माद्युधिष्ठिरो जज्ञे मारुतात्तु वृकोदरः ।
इन्द्राद्धनंजयः श्रीमान्सर्वशस्त्रभृतां वरः ॥ ९७
जज्ञाते रूपसंपन्नावश्विभ्यां तु यमावुभौ ।
नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ॥ ९८
तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ॥ ९९
अभिमन्युः सुभद्रायामर्जुनादभ्यजायत ।
स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥१००
पाण्डवेभ्योऽपि पञ्चभ्यः कृष्णायां पञ्च जज्ञिरे ।
कुमारा रूपसंपन्नाः सर्वशस्त्रविशारदाः ॥ १०१
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥१०२
तथैव सहदेवाच्च श्रुतसेनः प्रतापवान् ।

---

अस्त्रविदां. K (except K1) °विशारदः. Ñ2 V1 B D (except D3.5) द्रोणादेव महाबलः. — After 90, D3 T G1.3.6 ins.:

526* धृष्टद्युम्नविनाशाय सृष्टो धात्रा महात्मना ।
[ G1 °य धनुषा सह वीर्यवान् (cf. 91f). ]

91 c) K1 तपः; K2 T2 G4-6 ततः; G1 कृते; G3 तदा (for तते). — e) D5 °णवधार्थाय. — f) Ñ2 V1 B D (except D5) धनुरादाय वी°.

92 a) Ñ1.2 V1 B D (except D5) तत्रैव.

93 a) K2-4 Ñ1.2 V1 B1.3.4 Da2 Dn D1.2 M3.5 प्रह्राद° (as in text); the rest प्रह्लाद°. M6-8 ननजित्(!). — b) M5 °भवत्सुतः. — c) D2 ततः; T2 G2.4.5 तस्मात् (for तस्य). K1 °धर्त्री; D3 S धर्म(T1 रम्य)धात्री. — d) K धर्मप्र°; Ñ3 T G1.4.5 M3.5 °कोपना; D5 वेदप्र°.

94 ab) A few MSS. गंधार°. M5 °निश्चापि सौबलः. K2 Da T2 तदा (for °था). G1-3.6 गान्धारराजः (G6 °जात्) सुबलः (G6 °लात्) शकुनिश्चापि सौबलः. — c) Ñ1.2 V1 Dn D1.3.4 °स्य जननी. — d) Ñ2 V1 B D (except D5) G4 M5 °विशारदौ.

95 b) K2 T1 M6-8 नरेश्वरः. — d) N2 V1 B (B6 marg.) Da3 D2 °भुजः; Da1 °प्रभुः; G4.5 °रथः; M3 °यशाः. — After 95, N (Ś1 missing) ins.:

527* धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः ।
विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि ।

[ (L. 1) K Ñ2 B3.6 D2.5 °लो विद्वान्मे°. Ñ1 धर्मार्थयोश्च कुशलो. K0-2.4 Ñ1 B D6 वीत°; K3 D3.4 धूत(K3 वीत)किल्बिषः; Ñ3 Da गत°. ]

96 a) B4.5 Da D2.4 M6-8 च (for तु). — c) K1 Da1 D2 T G1.2 M (except M5) गुणश्रेष्ठः; D5 कुन्तिमाद्र्योः. — d) D5 ज्येष्ठस्तेषां यु°.

97 b) Ñ1.2 V1 B D (except D5) च (for तु). — c) S °जयो जज्ञे. — d) A few MSS. °शास्त्र°. S (except G3 M5) -विशारदः (cf. 88b).

98 a) K1 वीर्यसं°. — b) K3 Ñ1.2 V1 B D (except D4) च (for तु). Ñ2 V1 B D अपि (for उभौ).

99 b) G1 *inf. lin.* राष्ट्रो जनेश्वरः. — d) D3 G6 चरमः; T G1-5 अपरः; M3.5 करुणः; Cd करणः (as in text). Da नृपः (for तथा). — After 99, Ñ V1 B D (except D5) ins.:

528* ततो दुःशासनश्चैव दुःसहश्चापि भारत ।
दुर्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः ।
जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ।
वैश्यापुत्रो युयुत्सुश्च एकादश महारथाः ।

[ (L. 1) Ñ3 B Da D2.3 एव (for अपि). — (L. 2) V1 दुर्धर्षणो. ]

100 b) B5 D2 S (except T) अपि (for अभि-). — K3 om. from 100d up to 1. 59. 1c.

101 K3 om. 101 (cf. v. l. 100). — a) Ñ2 V1 Dn1.n2 D1.3 हि (for ऽपि). Ñ2 V1 B D (except D5) M3.5 पांचाल्यां (B6 D3 °ल्याः). G3 °भ्यो महर्षिभ्यः. — b) K (K3 om.) कृष्णायाः; Ñ2 V1 B D (except D5) द्रौपद्यां (B6 D3 °द्याः). — d) K (K3 om.) Ñ V1 B4-6 D (except D2.3.5) T1 G (except G3.6) M3.5 °शास्त्र°.

102 K3 om. 102 (cf. v. l. 100). — a) K (K3 om.) B4.5 transp. प्रति° and युधि°. D3 धर्मराजात्. — b) K1.4 G1 M5 सुतः सोमो; K2 B4.5 (m as in text)

हिडिम्बायां च भीमेन वने जज्ञे घटोत्कचः ॥१०३
शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता ।
यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया ॥१०४
कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ ।
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे ॥ १०५
तेषामपरिमेयानि नामधेयानि सर्वशः ।
न शक्यं परिसंख्यातुं वर्षाणामयुतैरपि ।
एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् ॥१०६

इति श्रीमहाभारते आदिपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

## ५८

जनमेजय उवाच ।
य एते कीर्तिता ब्रह्मन्ये चान्ये नानुकीर्तिताः ।
सम्यक्ताञ्श्रोतुमिच्छामि राज्ञश्चान्यान्सुवर्चसः ॥ १
यदर्थमिह संभूता देवकल्पा महारथाः ।
भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि ॥ २
वैशंपायन उवाच ।
रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम् ।
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ॥ ३
त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा ।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ ४
तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान्क्षत्रिया राजन्गर्भार्थिन्योऽभिचक्रमुः ॥ ५
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ६

C. 1. 2461
B. 1. 64. 6
K. 1. 65. 6

---

D3 श्रुत°. — c) T G4.5 M3.5 श्रुतकर्मा (cf. v. l. 103). Da Dn च (for तु).

103 K3 om. 103 (cf. v. l. 100). — b) G3 श्रुतवर्मा; M6–8 श्रुतकर्मा (cf. v. l. 102). — c) K0.2.4 Da1 D3 हिडंबायां. G (except G1.2) तु (for च). S भीमस्य.

104 K3 om. 104 (cf. v. l. 100). — d) D3 T1 G1 स्थाणुः; D4 G3.4–6 स्थाणु-.

105 K3 om. 105 (cf. v. l. 100). — b) G (except G1.3) समाजग्मुः.

106 K3 om. 106 (cf. v. l. 100). — a) B1.3.6 D3.4 येषां. D (except Da D5) °मेयानां. — After 106ab, D1 reads (for the first time) 1. 58. 2ab. — c) Ñ1.2 V1 B D (except D5) न शक्यानि समाख्यातुं. — e) D3 ते; G4.5 नु (for तु). — f) Ñ3 G1.2 °दं कृतं.

Colophon. Ś1 missing; K3 om. (cf. v. l. 100). — *Major parvan*: T2 G M संभव° (for आदि°). — *Sub-parvan*: K0.2.4 Ñ1.2 V1 B4.5 अंशावतरण; B1.6 Da D3.4 Cd संभव. — *Adhy. name*: K0.2.4 कृष्णद्वैपायनाद्युत्पत्तिः; Ñ1.2 V1 व्यासाद्युत्पत्तिः; T G4 M व्यासोत्पत्तिः. — *Adhy. no.* (figures, words or both): K0 58; K1 [7]2; Ñ1.2 V1 63; Da1 60; Dn3 62; D3 64; D4 61; T1 55; T2 G4.5 M 5; G1–3 7; G6 6. — *S'loka no.*: Da1 121; Dn 123. — *Aggregate s'loka no.*: Dn2 2430.

**58**

☞ This adhy. is missing in Ś1 (cf. v. l. 1. 55. 3) and om. in K3 (cf. v. l. 1. 57. 100); these MSS. are ignored here.

1 D3 om. जन° उ°; K1 S om. उ°. — a) Ñ V1 यत्र ते (Ñ3 तत्) की°; T1 ये चान्ये की°. — c) K0.2.4 Ñ1.3 T G (except G3) ज्ञातुमि°. — d) Ñ3 स सर्वशः; D (except D2.5) सहस्रशः.

2 b) Ñ3 °ल्पा महौजसः. — c) K4 B4 D3 T2 G (except G1.3) तान्मे. — d) G1.3 सत्यमाख्या°.

3 K1 Dn1.n2 D3 S om. उवाच. — a) M6–8 रहस्यां. T2 G (except G1.3) यदिदं. — b) T1 G4.5 इति वि-; T2 G1–3.6 ऋषितः (for इति नः). — 3cd = (var.) 1. 59. 9ab. — c) Ñ1.2 V1 B D2 हन्त ते; M3 तत्तेहं. K D5 कीर्तयि°. — d) K D2.3.5 नमस्कृत्य. G3 पिनाकिनं.

5 c) K0 transp. ब्राह्म° and क्षत्रि°. — d) Ñ2 Da1 Dn D1 सुतार्थि°; B4 पुत्रार्थि° (m as in text). Arjp अभिचुक्रुशुः.

6 a) M6–8 समाजग्मुः; Cd as in text. — b) A few MSS. शंसित- and शंशित-; cf. v. l. 1. 1. 2, 53; 13. 10, 14, 29 etc.

7 a) D (except D2.4.5) च (for तु). Dn D1.4 गर्भं; G1–3 पुत्रान्. — b) G3 क्षत्रियांस्तान्समुच्छ्रितान्.

C. 1. 2462
B. 1. 64. 7
K. 1. 65. 7

तेभ्यस्तु लेभिरे गर्भान्क्षत्रियास्ताः सहस्रशः ।
ततः सुषुविरे राजन्क्षत्रियान्वीर्यसंमतान् ।
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये ॥ ७
एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ।
जातमृध्यत धर्मेण सुदीर्घेणायुषान्वितम् ।
चत्वारोऽपि तदा वर्णा बभूवुर्ब्राह्मणोत्तराः ॥ ८
अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा ।
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि ।
ऋतौ दारांश्च गच्छन्ति तदा स्म भरतर्षभ ॥ ९
ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः ।
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः ।
आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः ॥१०
अथेमां सागरापाङ्गां गां गजेन्द्रगताखिलाम् ।
अध्यतिष्ठत्पुनः क्षत्रं सशैलवनकाननाम् ॥ ११
प्रशासति पुनः क्षत्रे धर्मेणेमां वसुंधराम् ।
ब्राह्मणाद्यास्तदा वर्णा लेभिरे मुदमुत्तमाम् ॥ १२
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः ।
दण्डं दण्ड्येषु धर्मेण प्रणयन्तोऽन्वपालयन् ॥ १३
तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः ।
स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः ॥ १४
न बाल एव म्रियते तदा कश्चिन्नराधिप ।
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनः ॥ १५
एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ ।
इयं सागरपर्यन्ता समापूर्यत मेदिनी ॥ १६

— [d]) B1.3.6 D3.4 क्षत्रिया. Ñ1 B Da2 Dn D1-4 वीर्यवत्तरान्; Ñ3 D5 G1.3.6 °सत्तमान्; G2.4.5 °संमि°. — [f]) B4.5 G6 क्षत्रियवृ°; T G4.5 क्षत्रप्रवृ°; G1-3 M3.5 क्षत्रविवृ°; M6-8 क्षत्रमवर्धत.

8 [a]) G1.3 तु (for तद्). — [b]) T2 G4.5 तपोर्थिभिः. — After 8[ab], Ko.4 ins. three lines given in App. I (No. 40). — [cd]) Ñ3 जातमृद्धेन; B D जातं वृद्धं च (D5 जातमृध्यं तु); Cd as in text. Ñ3 °युषा युतं. Ñ1 विवर्धितश्च धर्मेण सुदिव्येन सुखान्वितः. — After 8[cd], K4 ins.:

529* क्षत्रं तदा महीपाल स्वधर्मं परिपाठनात् ।

— [e]) K1.4 Ñ2 V1 B3 D (except D2.4.5) ततो; Ñ1 T1 तथा. — [f]) T1 G3.6 ब्राह्मणैः समाः (G3 °मं); Cd (corrupt) probably as in text.

9 K2 om. 9[ab]. — [a]) S ततो (T1 M5 तदा) (for ऋतौ). B1.3.4 Da T2 नारीः; D3.4 राजन्. — [b]) T2 सकामा°; G5 M3 नाकामा°. — [c]) Ko.2.4 दारान्न; K1 धारां हि (sic); Ñ3 M5 °राश्चि; B3.4.6 D2 °रांस्तु; D5 °राञ्च; T2 G1.3.6 हि दारान्; G2.5 M3 °राणि; G4 °रान्हि. T1 भूतानि धारान्ग°. — [f]) Da तदा तु; Dn D1.4 तत्तथा; T तथा स्म; G2 तदासन्; G6 सर्वाणि.

10 [a]) G1-3 transp. वर्ध° and धर्मे°. — [c]) A few MSS. °पालाः. K1 तथा प्रजा महीपालाः. — [d]) Ko.2.4 सत्यधर्म°; G1.3 धर्मवृत्त°. — [f]) T G4.5 M शतशो नराः; G1.3.6 सुखमाप्नुयुः. G2 मुक्ताः सुखमवाप्नुयुः.

11 [a]) Ñ V1 B Da Dn D2 °रा(D2 °रो)पांगीं; D3 T G3-6 M3 °रोपांतां; G1.2 °रोपेतां. Cd mentions अपांग. — [b]) D1.4 राजेंद्र°. Ko.2.4 Ñ3 °गते°. D2 गां नरेंद्र ततोखिलां; D3 T G नरेंद्रेंद्र (D3 G1.4.5 °रेंद्राणां) धरां (D3 G1.2 °रा) किल; M नरेंद्रेंद्रशतैर्वृतां (M3.5 °तैश्चितां). ✻Dev.: गजेंद्रगतेति जनमेजयस्य संबोधनं ।✻ — [c]) G1 °ष्ठत्ततः; G3 °ष्ठन्त तत्. — [d]) Ko.2.4 Ñ V1 B D (except D3) T °वनपत्तनां.

12 B6 D2 G2 (hapl.) om. 12[b]-14[a]. — [c]) Ko.2.4 Ñ2 V1 B (B5 om.) Dn D4 ततो; Da D3 अथो; D5 T1 G1.4-6 तथा (for तदा).

13 B6 D2 G2 om. 13 (cf. v. l. 12). — [a]) Ñ3 °क्रोधभवा°. — [b]) Ñ2.3 V1 B1 Da D3.4 च जनाधिपाः. — [c]) Ñ1 दंड्यान्; D5 G1.3 दंडान् (for दण्डं). D4 transp. दण्ड्ये° and धर्मे°. M6-8 °षु विधिवत्. Ñ2 V1 Dn D1 धर्मेण दंडं दंड्येषु. — [d]) K4 Ñ3 प्रयतंतोन्व(Ñ3 °नु)पा°; B4 °तो ह्य(m नु)पा°; T G1.3 प्रापयं(T1 °तं)तोभ्य (G3 °न्व as in text)पा°; G6 दंडयंतोन्वपा°.

14 B6 D2 G2 om. 14[a] (cf. v. l. 12). — [a]) K B (B6 om.) Da1 Dn2 D5 G3 M6-8 क्षेत्रे. — [b]) K D5 G1.3 °क्षः शचीपतिः. — [c]) Ko.2.4 D5 (? Cd) साधु; Ñ2 स्वयं; D2 तदा; G2 वारि (for स्वादु). — [d]) Ko.2.4 D3-5 G1 (? Cd) वर्षेण; K1 धर्मेण; B4 वर्षासु (for ववर्ष). T1 पुनः (for प्रजाः). Ñ1 Dn D1 वर्षेणापाल्यत्प्रजाः. — Cd appears to have read साधु and वर्षेण, but the MS. is corrupt and the comm. unintelligible.

15 [b]) K2 Ñ1.2 V1 B D (except D2.5) जनाधिप. — [d]) D2-4 °यौवनां.

16 [c]) B1.5 D6 च (for तु).

17 [b]) S (except G1-3) °या भूरि°. — [c]) Cf. 1. 2. 235[ab]. Ko.2 B1 (m as in text).3m.4-6 Da D2.3 G6

ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः ।
साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा ॥ १७
न च विक्रीणते ब्रह्म ब्राह्मणाः स्म तदा नृप ।
न च शूद्रसमाभ्याशे वेदानुच्चारयन्त्युत ॥ १८
कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह ।
न गामयुञ्जन्त धुरि कृशाङ्गाश्चाप्यजीवयन् ॥ १९
फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः ।
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥ २०
कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः ।
धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः ॥ २१
स्वकर्मनिरताश्चासन्सर्वे वर्णा नराधिप ।
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् ॥ २२
काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।
फलन्त्यृतुषु वृक्षाश्च पुष्पाणि च फलानि च ॥ २३
एवं कृतयुगे सम्यग्वर्तमाने तदा नृप ।
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥ २४
ततः समुदिते लोके मानुषे भरतर्षभ ।
असुरा जज्ञिरे क्षेत्रे राज्ञां मनुजपुंगव ॥ २५
आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि ।
ऐश्वर्याद्भ्रंशिताश्चापि संबभूवुः क्षिताविह ॥ २६
इह देवत्वमिच्छन्तो मानुषेषु मनस्विनः ।
जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ २७
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च ।
क्रव्यादेषु च भूतेषु गजेषु च मृगेषु च ॥ २८
जातैरिह महीपाल जायमानैश्च तैर्मही ।
न शशाकात्मनात्मानमियं धारयितुं धरा ॥ २९
अथ जाता महीपालाः केचिद्बलसमन्विताः ।
दितेः पुत्रा दनोश्चैव तस्माल्लोकादिह च्युताः ॥ ३०
वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् ।
इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥ ३१

C. 1. 2487
B. 1. 64. 33
K. 1. 65. 33

°निपदो वे°. — d) D3 S (except T1) चाधीयिरे (cf. v. l. 1. 1. 50).

18 a) G2.4 नैव वि°. Ñ2.3 विक्रीयते. D5 वेदं; cf. Dev. ब्रह्म वेदः। — b) Dn2 D3 T2 G2.4-6 च; G3 तु (for स्म). — c) Ko.2.4 Ñ V1 B Da Dn2 D1.2.5 T1 °भ्यासे. — d) B °यंत्यपि; D2.4.5 °यन्पुनः.

19 a) B1.3.6 D2 कारयंति. — b) K (K3 om.) B3 D5 T1 G1 तदा (for °था). Dn3 ते वैश्याश्च. G1.3 कृता (G3 °ते) भुवि. — With 19cd cf. 1. 57. 11cd. — c) K1.2 °मयुजंत; B D2 G2 °मयुंजत; M3.5 °मयुज्यंत. Ñ1.2 V1 Dn D1.3.4 युंजते धुरि नो गाश्च; Ñ3 न गा संयुंजंत धुरि; Da1 corrupt; Da2 न गा वै युंजते धूरि (sic). — d) Ko.2.4 B5.6 G6 कृशांगां चा°; K1 Ñ V1 B3 Dn D2.4.5 M5 °गांश्चाप्य°; B4 कृष्णांगां चाप्य°; T2 G2.4.5 कृशांश्चाप्यनु°; G1.3 कृशांश्चैव हि जी°; M6-8 °गाश्चाप्यवाहयन्.

20 a) K (K3 om.) D5 G (except G5) M3.5 तदा (for °था). — b) M3.5 दुह्यंति; Cd as in text. — Ñ3 reads 22b for 20b. — Ko om. 20c-21b.

22 a) Ko B4.5 T1 G1.2 स्वधर्मे°. — b) S सर्वे-. — After 22ab, G (except G3) ins.:

530* धर्ममेवानुवर्तन्ते न पश्यन्ति स्म किल्बिषम् ।
बभूवुः कर्मसु स्वेषु सम्यक्सर्वाः प्रजाः स्थिताः ।

— d) Ko.2.4 D5 ह्रसति (K2 sup. lin. विहते); G3 भ्रश्यते.

23 a) G4-6 कालेनैव. — b) Da T3 पुरुषर्षभ. — c) K2 sup. lin. कालश्च; B (B5m as in text) Dn D1.2.4.5 भवंति (for फलन्ति). Ñ2 V1 B (B1m as in text) D1.2.4 वृक्षाणां.

24 b) Ñ1 G1.3 °माने नराधिप.

25 a) Ñ1 V1 B1.6m D (except Da D2.5) एवं (for ततः). K4 Ñ2 T G1.5 M5.8 प्रमु°; B (except B1; B6m as in text) Da ते मु°; D2 तु मु° (for समु°). Ñ2 V1 Da D4 काले. — d) Ñ2 V1 B D (except D5) राज्ञां तु मनुजेश्वर.

26 b) G बहवो नि°. — c) Ko.2.4 D5 T2 G6 चैव; Ñ1 Dn D1.3.4 स्वर्गात्; G1-5 ते वै (for चापि).

27 a) Ko.2.4 °त्वमीप्संतो (K4 °ते). — b) Ñ3 पुनः पुनः; G (except G4.5) तपस्विनः.

28 b) G4.5 खरोष्ट्रे मानुषे°. — c) K1 Ñ V1 B D (except D5) T1 G1.3 M3.5 क्रव्यात्सु चैव भू°. — d) Ñ2 नागे°; Ñ3 व्याजे°; B1 खगे° (m as in text) (for गजे°).

29 a) D5 जातैश्चैव. — b) M6 तैर्विभो. — c) Ñ3 D4 G3 °शाक तदात्मानं. — d) K4 तदा; D5 अभि- (for इयं). Ko.2 Ñ1.3 D5 T2 G4-6 M तदा; K1 नृप; T1 तथा (for धरा).

30 b) Ñ1 मद्बलाश्रयात्; Ñ3 B (B3 marg.) D बहु° Ñ3 B3 Da °ल)मदा° (D2 वित्तसम°; D5 दर्पसम°); S (except G1-3) मद्बला°. — d) Ñ3 T G देव-; D3 तदा; M6-8 ततो (for तस्माद्). K1 Ñ1.2 V1 B Da Dn D1.4 तदा लोक

C. 1. 2468
B. 1. 64. 34
K. 1. 65. 34

ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैवाप्यपीडयन् ।
अन्यानि चैव भूतानि पीडयामासुरोजसा ॥ ३२
त्रासयन्तो विनिघ्नन्तस्तांस्तान्भूतगणांश्च ते ।
विचेरुः सर्वतो राजन्महीं शतसहस्रशः ॥ ३३
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।
अब्रह्मण्या वीर्यमदा मत्ता मदबलेन च ॥ ३४
एवं वीर्यबलोत्सिक्तैर्भूरियं तैर्महासुरैः ।
पीड्यमाना महीपाल ब्रह्माणमुपचक्रमे ॥ ३५
न हीमां पवनो राजन्न नागा न नगा महीम् ।
तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ॥ ३६
ततो मही महीपाल भारार्ता भयपीडिता ।
जगाम शरणं देवं सर्वभूतपितामहम् ॥ ३७
सा संवृतं महाभागैर्देवद्विजमहर्षिभिः ।
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ॥ ३८
गन्धर्वैरप्सरोभिश्च बन्दिकर्मसु निष्ठितैः ।
वन्द्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ॥ ३९
अथ विज्ञापयामास भूमिस्तं शरणार्थिनी ।
संनिधौ लोकपालानां सर्वेषामेव भारत ॥ ४०
तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयंभुवः ।
पूर्वमेवाभवद्राजन्विदितं परमेष्ठिनः ॥ ४१
स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत ।
सुरासुराणां लोकानामशेषेण मनोगतम् ॥ ४२
तमुवाच महाराज भूमिं भूमिपतिर्विभुः ।
प्रभवः सर्वभूतानामीशः शंभुः प्रजापतिः ॥ ४३
यदर्थमसि संप्राप्ता मत्सकाशं वसुंधरे ।
तदर्थं संनियोक्ष्यामि सर्वानेव दिवौकसः ॥ ४४
इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च ।
आदिदेश तदा सर्वान्विबुधान्भूतकृत्स्वयम् ॥ ४५

---

इहाच्युत (Ñ1.2 V1 B6 Dn °ताः); M3 ततो लोकादिहागताः; M5 तदा लोकमिहागताः.

32 [b]) K (K3 om.) Da °श्चैवाभ्यपी°; Ñ3 T2 G2.4.5 M3.6.7 °श्चैव प्रपी°. T1 M5–8 शूद्रा(M8 °द्रां)श्चापि प्रपी°; G1.3.6 तथा शूद्रानपी°. — [c]) Ñ2 V1 B D (except D5) चैव सत्वानि.

33 [a]) T तापयंतो. Ñ V1 B D (except D5) °तोभि (B5 °ति)नि°. — [b]) Ñ2 V1 Da Dn D1.3.4 सर्वभूत°; B D2 सर्वान्भूत°. — [c]) Ko.2.4 Ñ V1 B D सर्वशो.

34 [c]) Ko.2.4 वीर्यवंतो; K1 D2 G5 M3.7.8 °मदान्; Cd as in text. T1 ब्रह्मवीर्यमदा मत्ता. — [d]) Ñ3 D2 T M बलमदे°. G1.4.5 °बलान्विताः.

35 [a]) Ko.2.4 D3.5 वीर्यमदो°; T1 °बलोत्सेकैर्; G1.3 °बलोपेतैर्; G2.4.5 वीर्यमदोन्मत्तैर्. — [b]) K1 Da भूरिपत्रैर्; Ñ V1 B5.6 Dn D1–3 Devp भूरियत्नैर्; G1 Arjp भूरियंत्रैर्; G2 भूरिवंतैर्. ❀Dev.: परिपत्रैर्भूरिवाहनैः।❀ G1 °रथैः (for °सुरैः). — [c]) Ñ1.3 Dn D3 मही राजन्; Ñ2 V1 B Da D1.2.4 G3 Nilp महाराज.

36 [a]) K1 [न] भूतां; Ñ1 V1 Dn न ह्यमी; B Da D1.3.4 Nilp न ह्येनां; T M5 न हि मां (M5 तां) (for न हीमां). K4 D5 पन्नगो (D5 °गा) रा°; Ñ1.2 V1 Dn D1.3.4 भूतसत्वौघाः; B Da भूतसत्वौघ- (Da1 °घैः); T पालने रा°; G सवना (G3.6 °नां) रा°. — [b]) M3 *inf. lin.* गजा (for नगा). Ñ1.2 V1 B D (except D2.5) पन्नगाः सनगां (B1.3.5 D3 °गा) म°; T G3 नानारूपधरां म°; G1.2.4.5 नानारूपान् (G1.4 °पा) मही तदा; G6 नानाकाननगां म°.

37 [b]) Ñ3 भारतो भय°. — [d]) G1.6 सर्वलोक°.

38 [a]) B6 D2 समावृतं; D5 आसं°; G6 समायु°; Cd as in text. — [c]) G1.3 देवमासीनं.

39 [b]) B3 ब्रह्मकर्मसु; Dn दे(Dn2 दै)व°. — [cd]) T1 °नं मुदा सर्वैर्ववंद्येते महाबलाः.

40 [b]) B4.5 S शरणैषिणी. — [c]) K (K3 om.) D5 समक्षं लो°.

41 [a]) M6–8 °स्तस्याः. Ñ3 तस्याः प्रसादार्थं तदा; B5 तत्प्रभावात्म°; G2.4.5 तत्प्रसादादृते तस्याः; G6 तत्प्रयाणात्पुरा तस्याः; Cd (entire pāda!) as in text. — [d]) K4 G2.6 °मेष्ठिना.

42 [b]) K1 B1.4 D2.4 स (for सं-). — [c]) Ñ3 G6 सर्वेषां (for लोकानां). Ñ2 V1 B D (except D5) ससुरासुरलो°. — [d]) Ko.2.4 G अशे(G6 मानु)षाणां; Ñ1.2 विशे°.

43 [a]) T महीपाल; G3 महाभाग; G6 °तेजा. — [b]) Ñ2 V1 B (except B1) D (except D5) प्रभुः; Cd as in text.

44 Before 44, Ñ2 B (except B1) D (except D2.5) ins. ब्रह्मोवाच. — [a]) K2 Dn °मभिसं°; T M6–8 °मिह सं°. — After 44, T2 G (except G3) ins.:

531* उत्तिष्ठ गच्छ वसुधे स्वस्थानमिति सागमत् ।

45 Before 45, Ñ2 Dn2 ins. वैशं° उ°.

46 [c]) M3 अस्यां भूमौ. — [d]) B1 (m as in text).3.6

अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक् ।
अस्यामेव प्रसूयध्वं विरोधायेति चाब्रवीत् ॥ ४६
तथैव च समानीय गन्धर्वाप्सरसां गणान् ।
उवाच भगवान्सर्वानिदं वचनमुत्तमम् ।
स्वैरंशैः संप्रसूयध्वं यथेष्टं मानुषेष्विति ॥ ४७
अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः ।
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ॥ ४८
अथ ते सर्वशोंऽशैः स्वैर्गन्तुं भूमिं कृतक्षणाः ।
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ ४९
यः स चक्रगदापाणिः पीतवासासितप्रभः ।
पद्मनाभः सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ॥ ५०
तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरस्वेति तथेत्याह च तं हरिः ॥ ५१

इति श्रीमहाभारते आदिपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## ५९

वैशंपायन उवाच ।
अथ नारायणेनेन्द्रश्चकार सह संविदम् ।
अवतर्तुं महीं स्वर्गादंशतः सहितः सुरैः ॥ १
आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः ।
निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह ॥ २
तेऽमरारिविनाशाय सर्वलोकहिताय च ।

C. 1. 2511
B. 1. 65. 3
K. 1. 66. 3

---

Da $D_{3.4}$ T G Cd ति($Da_1$ $G_1$ नि)रोधा°; Arjp as in text (? "*apapāṭha*"). $Ñ_1$ °येदमग्र°; $Ñ_3$ °येति सर्वेश:.

47 $D_2$ om. $47^{abcd}$. — $^{a}$) $T_2$ तदैव; $G_{1.3}$ तथेति. — $^{bc}$) $M_{6-8}$ °प्सरसो (for °प्सरसां), and देवान् (for सर्वान्). — $^{d}$) $K_1$ $Dn_3$ $D_1$ अब्रवीत्; $Dn_1.n_2$ $D_{3.4}$ अर्थवत्; $G_6$ उत्तरं (for उत्तमम्). — Before $47^{ef}$, $K_4$ $Ñ_{2.3}$ $V_1$ B ($B_6$ marg.) $Da_2$ $D_{1.2.4}$ ins. ब्रह्मोवाच. — $^{e}$) $K_{0.4}$ Ñ $V_1$ B D स्वैः स्वैरंशैः प्र°. — $^{f}$) $V_1$ यथावन्मा°. $Ñ_{1.2}$ $V_1$ B D (except $D_5$) च (for इति).

48 Before 48, $B_3$ $D_4$ (both marg.) ins. वैशं° उ°. — $K_0$ om. from जगृहु° up to °र्गन्तुं ($49^{b}$).

49 For $K_0$ cf. v. l. 48. $G_3$ om. 49. — $^{a}$) $K_{2.4}$ ब्रह्मणा सार्धं; S ($G_3$ om.) सर्वशो($G_{2.4.5}$ °तो)प्यंशैः (for सर्वशोंऽशैः स्वैर्). — $^{b}$) $K_{0.2.4}$ सर्वे देवगणाः प्रभुं ($K_0$ om. सर्वे).

50 $^{a}$) $G_4$ शंखचक्र°. — $^{b}$) $Ñ_3$ °वासामित°; B (except $B_6$) Dn $D_3$ °वासाः शिति°. — $^{d}$) $Dn_1.n_3$ Nilp पृथुवक्षांचि°. — After 50, N (except $Ñ_3$ $B_4$ $D_2$; $Ś_1$ missing; $K_3$ om.; $V_1$ om. line 1) ins.:

532* प्रजापतिपतिर्देवः सुरनाथो महाबलः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ।

[ (L. 1) K ($K_3$ om.) $Ñ_{1.2}$ $B_{1.5}$ $D_5$ पद्मनाभो महा°. — (L. 2) $K_1$ $B_1$ °दैवतयूथपः. ]
— After 50, $G_3$ ins. 533* (cf. v. l. 51).

51 $G_3$ om. 51. — $^{a}$) $Ñ_2$ $V_1$ $B_1m._{3.5.6}$ $D_2$ साधना°; $D_1$ दोषहीनाय; Cd as in text. (दोषहानये is Dev.'s explanation of शोधनाय.) — $D_2$ (hapl.) om. from $51^{b}$ up to 1. 59. $1^{a}$. — $^{b}$) K ($K_3$ om.) $D_5$ उवाच मधुसूदनं. — $^{c}$) $K_{0.2}$ भूमो ह्यव°. $Ñ_{1.2}$ B D (except $D_5$; $D_2$ om.) $T_2$ °तरेत्येवं. — $G_3$ (om. 51) ins. after 50: $G_6$, after 51:

533* सोऽपि जन्म मनुष्येषु लेभे सुरवरो हरिः ।

Colophon. $Ś_1$ missing; $K_3$ $D_2$ om. — *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $K_{0.2.4}$ Ñ $V_1$ B Da Dn $D_{1.4.5}$ Cd अंशावत(Cd °ता)रण; $T_1$ संभव; $M_{6-8}$ अंशावतार. — *Adhy. name:* $K_{0.2.4}$ ब्रह्मणो वाक्यं; $M_3$ अंशावतारारंभः; $M_{6-8}$ ब्रह्मावसुंधरासमागमः. — *Adhy. no.* (figures, words or both): $K_1$ 73; $Ñ_{1.2}$ $V_1$ 64; $Da_1$ 61; $Dn_3$ 63; $D_3$ 65; $D_4$ 62; $T_1$ 56; $T_2$ $G_{4.5}$ M 6; $G_{1-3}$ 8; $G_6$ 7. — *S'loka no.:* $Da_1$ Dn 54.

## 59

☞ This adhy. is missing in $Ś_1$ (cf. v. l. 1. 55. 3); the MS. is *wholly* ignored here.

1 $K_3$ om. 1. $D_2$ om. वैशं° उ° and $1^{ab}$. $K_1$ $D_6$ S om. उवाच. — $^{d}$) $K_1$ अंशशः; $Ñ_1$ $V_1$ °शांशैः; $Da_1$ °शेन; $D_5$ °शांशः; $T_1$ $G_{1.3.5}$ भागतः; $T_2$ $G_{2.4.6}$ M भागशः.

2 $G_3$ om. $2^{ab}$. — After $2^{ab}$, $T_2$ reads (for the

C. 1. 2511
B. 1. 65. 3
K. 1. 66. 3

अवतेरुः क्रमेणेमां महीं स्वर्गाद्दिवौकसः ॥ ३
ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च ।
जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ॥ ४
दानवान्राक्षसांश्चैव गन्धर्वान्पन्नगांस्तथा ।
पुरुषादानि चान्यानि जघ्नुः सत्त्वान्यनेकशः ॥ ५
दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा ।
न तान्बलस्थान्बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ६

जनमेजय उवाच ।

देवदानवसंघानां गन्धर्वाप्सरसां तथा ।
मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ॥ ७
श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः ।
प्राणिनां चैव सर्वेषां सर्वशः सर्वविद्ध्यसि ॥ ८

वैशंपायन उवाच ।

हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ।
सुरादीनामहं सम्यग्लोकानां प्रभवाप्ययम् ॥ ९
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ १०
मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥ ११
अदितिर्दितिर्दनुः काला अनायुः सिंहिका मुनिः ।
क्रोधा प्रावा अरिष्टा च विनता कपिला तथा ॥१२
कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत ।
एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् ॥ १३
अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः ।

---

first time) $5^{ab}$. — $^{c}$) Ko-2.4 D5 ततः; K3 M7.8 पुरः (for पुनः). M5 तस्य (for तस्मात्). — $^{d}$) K4 B1.5 Da G2.4 M6-8 च; T2 G6 हि.

3 $^{a}$) K1.4 D5 G6 ते सुरारि°. — $^{c}$) K3 Ñ V1 B D (except D5) क्रमेणैव.

4 K1 (hapl.) om. 4. — $^{a}$) K3 Da महर्षि°. — $^{b}$) G6 राजर्षीणां कु°. — $^{d}$) T यथाकालं.

5 For T2 cf. v. l. 2. — $^{a}$) B5 ब्राह्मणां° (for राक्षसां°). — D3 om. $5^{c}$–$6^{b}$. — $^{c}$) K4 सत्वानि; G अनेकानि (for चान्या°). — $^{d}$) D5 °घ्नुः सर्वाणि. K1 °न्यशेषतः.

6 K1 om. 6. K Da1 D2.3 G3 om. $6^{ab}$. — $^{ab}$) G1.2.6 दानवानां च ये मुख्यास्तथा भुजगरक्षसां. — $^{c}$) T G3.4.5 ते; G3 ये (for न). Da वय° (Da2 वन°) (for बल°). D2m बलिनः (for बाल्येऽपि). Ko.2.4 बालानपि बलस्थांस्तान्; V1 जातान्पुनस्तान्बा°; D5 ततोन्ववस्था°. — $^{d}$) K4 V1 न जघ्नुर्भरतर्षभ. — After 6, G3 reads 9.

7 K1 Dn1 D3 S om. उवाच. — After जन°, G3 ins.:

534* दानवानां च ये मुख्याः तथा भुजगरक्षसाम् ।

— $^{a}$) D2 °दैत्यानां. K Ñ3 देवानां दानवानां च; D5 दानवानां च देवानां. — $^{b}$) K2 अपि (for तथा). — $^{c}$) T2 G2.4.5 मानुषेष्विह स°. — $^{d}$) K3.4 S (except M8) तथाहं; Ñ3 तथेदं.

8 G1 repeats $8^{ab}$ after 9. — $^{b}$) G4.5 सांप्रतं कृ°. Ñ1 °वं सर्वम्. — G2.3 om. $8^{cd}$. — $^{c}$) G4.5 मानवानां च स°. — $^{d}$) T सर्वतः. K3.4 Ñ3 V1 B D (D5 corrupt) संभवं (K4 सर्वशो) वक्तुमर्हसि.

9 K1 D3 S om. उवाच. G3 reads 9 after 6. — $9^{ab}$ = (var.) 1. 58. $3^{cd}$. — $^{a}$) T1 तेषां ते; G1.2 अहं ते. — $^{b}$) K B1.4m.5 D (except Da D3) °स्कृत्य. — $^{c}$) D2 सर्वं (for सम्यग्). — $^{d}$) D5 G4 (*inf. lin.*) °प्ययौ. T G (except G4.5) संभवं कृत्स्नमादितः. — After 9, G1 repeats $8^{ab}$; while G3 ins.:

535* प्राणिनां चैव सर्वेषां सर्वशः प्रभवाप्ययम् ।

10 $^{ab}$) = 1. 60. $1^{ab}$.

11 $^{ab}$) S (except T1) काश्यपः and °श्यपात्. K1-3 S (except G1.3) प्रजा इमाः; K4 सुरासुराः. — $^{c}$) A few MSS. °भाग.

12 $^{a}$) B1m काष्ठा (for काला). — $^{b}$) N (except K2.4 B5; Ś1 missing) दनायुः (cf. v. l. 32 below and 1. 61. 39). K1 Ñ1 मता; Ñ2 Da1 Dn D1.5 (m as in text) तथा; Ñ3 V1 मुना; B5 Da2 स्वसा; D3 ध्रुवं; D4 इला (for मुनिः); see below. — $^{c}$) K2 क्रूरा (for क्रोधा); cf. 31 and v. l. K1 T1 प्रदा; K2 प्रवा; K4 Ñ2 V1 B1.3.4 Da2 Dn2.n3 D1.2.5 प्राधा; Ñ1 प्रथा; Ñ3 B6 Dn1 D4 G3 प्रधा; Da1 प्राची; T2 G2.4-6 M ध्रुवा; G1 प्रभा; G3 प्रलेयाः Ko.3 as in text (cf. v. l. 47). K Ñ1.3 V1 B3-6 D2.3 T2 G3.4 M वरिष्टा; Ñ2 Da Dn D1.4 च विश्वा; B1 T1 त्वरिष्टा; G1 ह्यरिष्टा; G6 -प्यरिष्टाः D5 G3.5 as in text. — $^{d}$) Ñ2 D (except D2.5) मुनिः (for तथा); see above.

13 $^{a}$) S पुरुषव्याघ्र. — $^{b}$) Ko.2.4 °कन्या हि; K3 D3.5 T G2-6 °कन्याश्च. B3 G1 M6-8 दक्षकन्यास्त्रयोदश. — $^{d}$) V1 T1 G3-5 °मनंतरं (G5 *inf. lin.* as in text).

14 $^{a}$) K1 T अदितेर्. — $^{c}$) K1.4 D5 ये जाता; K2

ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत ॥ १४
धाता मित्रोऽर्यमा शक्रो वरुणश्चांश एव च ।
भगो विवस्वान्पूषा च सविता दशमस्तथा ॥ १५
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ।
जघन्यजः स सर्वेषामादित्यानां गुणाधिकः ॥ १६
एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः ।
नाम्ना ख्यातास्तु तस्येमे पुत्राः पञ्च महात्मनः॥१७
प्रह्रादः पूर्वजस्तेषां संह्रादस्तदनन्तरम् ।
अनुह्रादस्तृतीयोऽभूत्तस्माच्च शिबिबाष्कलौ ॥ १८
प्रह्रादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति विश्रुताः ॥ १९
विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् ।
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः ॥ २०
चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत ।
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ॥ २१
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ।
असिलोमा च केशी च दुर्जयश्चैव दानवः ॥ २२
अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवान्केतुमांश्च यः ॥ २३
स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाजकस्तथा ।
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महासुरः ॥ २४
इसृपा एकचक्रश्च विरूपाक्षो हराहरौ ।
निचन्द्रश्च निकुम्भश्च कुपथः कापथस्तथा ॥ २५
शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा ।
इति ख्याता दनोर्वंशे दानवाः परिकीर्तिताः ।
अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ स्मृतौ ॥ २६ C. 1. 2535 B. 1. 65. 27 K. 1. 66. 27

corrupt. M6-8 नामभिस्तांस्तु.

15 a) V1 त्वष्टा (cf. v. l. 16); B4.5 (m as in text) ॰दित्यो; G2 शर्वो (for शक्रो). D2 मित्रोर्यमा च शक्रोथ. G transp. मित्रो and शक्रो. — b) K1.3.4 Ñ3 वरुणश्चांशुर्; B4 शक्रो वरुण. Ñ1.2 V1 D (except D2.5) तु (for the first च).

16 a) V1 शक्रो (for त्वष्टा); cf. v. l. 15. — b) Ñ1.2 V1 B D (except D5) transp. विष्णुर् and द्वादशः. — c) K1 च; Ñ V1 B Da Dn D1.4 तु (for स). D2 जघन्यो यस्तु स॰; D8 ॰जस्ततस्तेषां.

17 c) Da पंचेमे; D3 G (except G5) M3 तस्यैते. — d) Ñ1.2 V1 B D transp. पुत्राः and पञ्च. D3 महाबलाः.

18 Here and in the foll. st. S (mostly) प्रह्लाद्-, संह्लाद्- and अनुह्लाद्- (with ल for र).

19 cd) K D5 ॰नश्च जंभश्च कुजंभश्चेति वि॰. Ñ2 B D भारत (D3 नामतः; D5 विश्रु॰ as in text).

20 c) Da transp. प्रथि॰ and पुत्रः. — After 20, Ko.3.4 Ñ2.3 V1 B D ins.:

536* रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः ।

21 a) M3 चतुस्त्रिंश॰. — b) D3 दृत्याः; G4.5 द्वौ च (for ख्याताः). — c) K (except K4) D5 प्रथमतो; V1 च बलवान्. Ko.2.4m D5 G (except G4.5) M6-8 राजन्. — d) Ñ2 महासुरः.

22 b) G4.5 चैव (for चेति). K1 B4-6 Da D2.5 G6 M3.5 विश्रुताः. — d) D1 नामतः; G6 विश्रुतः (for दा॰).

23 a) G2 अश्वधरो. — b) K3 शंकुकर्णश्च; Dn1.n2 अश्व॰. — d) B5 transp. वेग॰ and केतु॰. Ko-2 Ñ1.2 V1 Dn D3.4 च सः; D5 M6-8 तथा.

24 G5 om. 24-50. — b) Ñ3 D3 ॰र्वाजगस्तथा; V1 D5 ॰र्वायकस्तथा; S (G5 om.) ॰र्वा (G6 ॰र्वा-) गजस्तथा. — d) Ko.3.4 तुहंडश्च; K3 तुदं॰; D2 भुसुं॰; G1.2 तुहंडु॰; G3 राहुदंडो. B6 Dn महाबलः.

25 G5 om. 25. — a) Cf. 1. 61. 21a and v. l. Ko इसृपादेकचक्रश्च; K1 इसृपा चैकव्यक्रश्च; K2 B6 Da इपु(K3 ॰सृ)पादेक॰; K3 इष्टपानक॰; K4 Dn D1.3.4 एकपादेक॰; Ñ1 इपुपाञ्चैव वज्रश्च; Ñ2 B1.5 इपुवाक्चैक(B5 ॰व)च॰; Ñ3 V1 B1 इपुपाच्चैक(V1 ॰व)च॰; B3.4m इपुवाङ्कैक॰; D2 इपुवार्थेक॰; D5 असृक्पादेक॰; T1 G1 स्वसृपा(T1 ॰प)श्चैव चित्तिश्च; T2 G2.4.6 खसृपश्चैक(T2 ॰व)चित्तश्च; G3 ख्य(inf. lin. घ)स्तवश्चैव चित्तिश्च; M खसृमश्चैक॰ (M5 असृपश्चैक-चित्तश्च). — b) B3.4 त्रिरूपाक्ष-. D5 हलाहलौ; G1.2 गरागरौ; G6 महासुरः. Ñ3 विरूपाक्षहरावुभौ; Dn D1.3.4 ॰पाक्षमहोदरौ; T1 ॰पाक्षा हवी हणिः (sic); T2 G4 M3 ॰पाक्ष (M3 ॰क्षो)महाहरौ; G3 ॰पाक्षहरिः हरिः. — c) K3.4 B5.6 Da T निश्चंद्र॰; M3.5 सुचंद्र॰. — d) Ñ2 कुपटः पटकस्तथा; Ñ3 कपटा कपदा॰; S (G5 om.) कुपथः का(G4 कौ)पथ॰ (G6 कुपशः कोपद॰).

26 G5 om. 26. — a) Ñ1 G1.4 M शारदः; T G2.3.6 शारदः. Ñ1 T G (G5 om.) M3.5 शरभ॰. — b) K2 ॰सौ स्मृतौ. K1.2 D2 om. 26cdef. — c) D (except D2.5) एते ख्या॰; T1 G2.4.6 M इत्याख्या॰. — M3.5 om. 26ef. — f) Da S (G5 M3.5 om.) ॰सौ तथा. — After 26, Ko.2.4 Ñ3 B Da Dn2.n3 D3-5 M3.5 ins.:

537* अन्यौ दानवमुख्यानां सूर्याचन्द्रमसौ तथा ।

C. 1. 2536
B. 1. 65. 28
K. 1. 66. 28

इमे च वंशे प्रथिताः सत्त्ववन्तो महाबलाः ।
दनुपुत्रा महाराज दश दानवपुङ्गवाः ॥ २७
एकाक्षो मृतपा वीरः प्रलम्बनरकावपि ।
वातापिः शत्रुतपनः शठश्चैव महासुरः ॥ २८
गविष्ठश्च दनायुश्च दीर्घजिह्वश्च दानवः ।
असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत ॥२९
सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्दनम् ।
सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रविमर्दनम् ॥ ३०
क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम् ।
गणः क्रोधवशो नाम क्रूरकर्मारिमर्दनः ॥ ३१

अनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः ।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ॥ ३२
कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ।
भुवि ख्याता महावीर्या दानवेषु परंतपाः ॥ ३३
विनाशनश्च क्रोधश्च हन्ता क्रोधस्य चापरः ।
क्रोधशत्रुस्तथैवान्यः कालेया इति विश्रुताः ॥ ३४
असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत् ।
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः ॥ ३५
त्वष्टावरस्तथात्रिश्च द्वावन्यौ मन्त्रकर्मिणौ ।
तेजसा सूर्यसंकाशा ब्रह्मलोकप्रभावनाः ॥ ३६

---

27 G5 om. 27. — a) Ñ1.2 B Da2 Dn D1–5 G2 वंशाः. K3 Da1 इमे (K3 इति) ख्याता दनोर्वंशे; Ñ3 इमे च प्रथिता वंशाः. — b) G3 महासुराः. — After $27^{ab}$, T G4 M read 30–31. — c) Ñ1.3 V1 B (except B1) Da °पुत्रान्वया (Ñ3 °स्तदा) राजन्; D5 दनोः पुत्रा परे राजन्; T1 G3.6 M दनु(G3.6 °नोः)पुत्रान्वये जाता; T2 G1.2 दनोस्तु पुत्रा ये जाता; G4 °पुत्रास्त्रयो जाता. — d) Ñ2 B D °ववंशजाः.

28 G5 om. 28. — a) Ñ1 मृतहा; V1 मृगपा; D (except D2) T2 G1.3.4.6 M °पो. — c) K2.4 B Da1 D1.5 G2 वातापि-; K3 Ñ1.2 V1 Da2 Dn1.n2 D2–4 G3 °पी. Ko.3.4 Ñ1 D5 शत्रु(Ñ1 °क्र)दमनः; K2 °मदनः; V1 शक्रतनयः; G6 °सहनः. — d) K (except K4) M3.5 सहश्चैव; Ñ2 V1 पट°; Dn3 शकटश्च; D2 सव°; T1 G4.6 सद्°; T2 G1 इल्वलश्च; G2 तप°; G3 शम°; M6–8 सदश्चश्च. Ko.3 महाबलः.

29 G5 om. 29. — a) K1 इतिपुश्च; Ñ3 गवेष्ठ°; V1 B5.6 गरिष्ठ°; D2 यवि°; T2 M3 दवि°; G1 हसिपु°; G2 गविभि°; G4 गभिष्ठ°. K4 स्वना°; Dn D1.4 वना°; T1 धना°. G3 हविश्शिष्मवना°; M6–8 °ष्ठश्चाप्यना°. — b) G दीर्घजंघश्च. K D5 वीर्यवान्. M (except M5) दीर्घजिह्वा च दानवी. — c) D5 सुतास्तेषां; G2.4 ततस्ते°. — d) B4 T G1.3.6 M6–8 पुत्रपौ°.

30 G5 om. 30. T G4 M read 30–31 after $27^{ab}$. — a) Ñ3 सिंही तु. — K1.3.4 B3 D2 om. (hapl.) $30^{cd}$. — c) Ñ1 B4 (m as in text) अचंद्रं; B6 स्व°. G1.6 M3.5 °भर्तारं; G3.4 °हर्तारं. — d) Ñ2 Dn D1.3.4 °प्रमर्दनं; V1 °प्रकाशनं.

31 G2 (hapl.).5 om. 31. For T G4 M cf. v. l. 30. — a) G4 °स्वभावाः. K4 D5 T1 G1.3 क्रोधायाः. — b) Ñ3 °पौत्राद्यनंत°. — d) K D5 रौद्रकर्मा°; Ñ3 Da °र्मा विम°; G4 °र्माप्यरिंदमः.

32 G5 om. 32. — a) N (except K2 B5) दना° (cf. v. l. 12 above and 1. 61. 39). Ko तथा; G1 तु वै; G3 तु ये (for पुनः). T G2.4 M अनायुपायाः (T1 °युः) पुत्रास्तु (M6–8 °श्च). — b) G1.3 M3.5 °सत्तमाः; G6 °संमताः. — c) Ko.2 विष्क°; K1 °क°; K4 °ष्ट°; Ñ2 °ह्वलो; B4 °ध्रनो (m °स्करो); G3 वीक्षदो. G3 °वीरश्च. G6 विक्षरश्च प्रवीरश्च.

33 G5 om. 33. — b) D3 कालकेयाः. — c) Ñ3 D3 सुवि°; B3 Dn D5 प्रवि°. T G4 महातेजा.

34 K2 om. $34^{ab}$; G5 om. 34. — b) Ñ1.2 V1 B D क्रोधहंता तथैव च (D5 हंता क्रोधस्तथापरः); S (T1 both times) क्रोधहंता च (G1.2 -ति) वीर्यवान्. — After $34^{ab}$, T1 ins. a line (विवर्धनिश्च क्रोधश्च क्रोधहन्ता च वीर्यवान् ।) consisting of the S readings of $34^{a}$ and $34^{b}$. — cd) Ñ V1 B4 Dn D4.5 °वान्ये. B5 m.6 Dn D1.2.4 कालकेया इति श्रुताः. S विवर्धन(T1 both times °नि)श्च क्रोधश्च (M3 कालश्च; M5 क्रोधस्य; M6–8 क्रोधात्मा) कालकेया (G3 °यो) महासुराः (G3 °रः).

35 G5 om. 35. — b) D2 T2 शुक्रः कविसुतो°; D3 G4 °क्रो भृगुसुतो°; T1 M6–8 °क्रः पुत्रः कवेर्ऋषिः; G1.2 °क्रः पुत्रो भृगोः कवेः (G2 °विः); G3 °क्रो पुत्र कवी ऋषिः; G6 °क्रः पुत्रैः स्वकै ऋषिः; M3.5 °क्रः (M5 °क्र-) पुत्रः कवेरिति. — K1 om. $35^{d}$–$37^{a}$. For B4.6 cf. v. l. 1. 60. 42.

36 K1 G5 om. 36 (cf. v. l. 35). For B4.6 cf. v. l. 1. 60. 42. — a) B1 m.3 m.4 (m as in text) Dn D1–4 त्वष्टाधर°; S (except G2.4; G5 om.) त्वष्टापर°. D5 त्वष्टा वरुत्री च तथा (sic). — b) Ñ2.3 V1 B Da Dn D1.2.4 रौद्रकर्मि°; D3 S (G5 om.) मन्त्र°; D5 सत्र°. Ñ1 त्वन्योन्यौ रौद्रक°. ※Arj. (in Da1 only): त्वष्टा धन्वस्तथात्रिश्च

इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ।
असुराणां सुराणां च पुराणे संश्रुतो मया ॥ ३७
एतेषां यदपत्यं तु न शक्यं तदशेषतः ।
प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ॥ ३८
तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेया इति स्मृताः ॥ ३९
शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजंगमः ।
कूर्मश्च कुलिकश्चैव काद्रवेया महाबलाः ॥ ४०
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥ ४१

पत्रवानर्कपर्णश्च प्रयुतश्चैव विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ॥ ४२
तथा शालिशिरा राजन्प्रद्युम्नश्च चतुर्दशः ।
कलिः पञ्चदशश्चैव नारदश्चैव षोडशः ।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ४३
अतस्तु भूतान्यन्यानि कीर्तयिष्यामि भारत ।
अनवद्यामनुवशामनूनामरुणां प्रियाम् ।
अनूपां सुभगां भासीमिति प्रावा व्यजायत ॥ ४४
सिद्धः पूर्णश्च बर्ही च पूर्णाशश्च महायशाः ।
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ॥ ४५

C. 1. 2555
B. 1. 65.47
K. 1. 66. 47

रेणुरर्कश्च तावुभौ पाठः ।❀ — c) B4.5 G3 °काशौ; T1 °काश·. — d) V1 ब्रह्मकल्पौ प्रभावन:; B4 (m as in text).5 °परायणौ; D (except D5) °परायणा:; Cd as in text.

37 G5 om. 37; K1 om. $37^{a}$ (cf. v. l. 35). — a) G2 M3 वंश: कथित:. — b) K1.3 D5 कीर्तितस्ते; G2 M3 प्रभवस्ते. Ñ3 कल्पितस्ते तपस्विने. — c) K Ñ3 D5 G6 transp. असु° and सुरा°. G4 च राजेन्द्र (for सुराणां च). — d) B4 (m as in text) °णेषु श्रु°.

38 G5 om. 38. — a) V1 तेषां च (for एते°). K D5 च (for तु). — b) Ñ1.2 V1 B (except B1) D2 G1 तद्विशेष°. — c) G1-3 प्रवक्तुं तन् (G3 ते). — d) Ñ3 गुणाद्भुतम्; D3 T G (G5 om.) गणभू°. D5 अनुत्तमं.

39 G5 om. 39. — c) D3 T G1-3.6 अरु°. — K1 (hapl.) om. $39^{d}$–$40^{c}$. — d) K4 °तेय इति श्रुत:; Ñ1.2 V1 B D (except D5) °तेया: प्रकीर्तिता:.

40 K1 om. $40^{abc}$ (cf. v. l. 39); Da1 (hapl.) G5 om. 40; D1 om. $40^{a}$–$41^{b}$. — a) T G1-3 अनंतो वासुकिश्चैव. — b) Some MSS. °गमा:. — c) T G3.4.6 M3 कुलल°; G1.2 कुलक°; M5 कुवल°; M6-8 कूकल°. — d) Ñ1.2 B D (except D5; Da1 D1 om.) °या: प्रकीर्तिता:; G1.8 °या इति स्मृता:.

41 D1 om. $41^{ab}$ (cf. v. l. 40); G5 om. 41. — a) D2 T1 G2.3 M7 °सेनश्च. — b) M3.5 सुपर्वा. Ñ3 गरुडस्तथा. — After 41, K4 Ñ2 V1 ins.:

538* अनेत्रो वर्हपर्णश्च तथा काशीपतिश्च स: ।

[K4 सुपर्णो बहुनेत्रश्च (for first half), and ह (for स:).]

42 G5 om. 42. — a) Ñ1 G6 M3.5 पुत्र°; Ñ2 यंत्र°; Dn D1.4 सत्यवाक्; T2 G2.4 पक्ष° (for पत्रवान्). K (except K3) Ñ3 D5 अर्कपत्र(Ñ3 °त्रा)श्च; G2.4.6 M अर्कव°. Da D3 सुनेत्रो ह्यर्क°; G1.3 अपामान(G3 °मा अ)र्कपुत्रश्च. — b) Ñ1 प्रद्युम्नश्चेति; B3 प्रसुप्त(m प्रघात)श्चेति; B4 प्रसूत(m पंडित)श्चेति; T G1-4 M3.6-8 प्रयुग(G2 °क)श्चैव; G6 पृथुगश्चै°; M5 प्रयत्तश्चै°. Ñ2 V1 Dn D1.4 चापि; B1.5.6 Da D2.3 चेति (for चैव). — c) G2 चित्रवरं चैव; M6-8 °तरश्चैव — d) M5 सर्वधर्मवित्.

43 G5 om. 43. — a) T G1.2.6 गाधिशिरा; G3 गोध°. — b) Ñ2 V1 B D पर्जन्य(D5 प्रघाम्न)श्च; T G (G5 om.) M6-8 धृष्टद्युम्न:; M3.5 धृष्टश्चैव. Some MSS. °र्दश. — c) G3 शतं पंच°. Ñ V1 B D (except D5) G4 M6-8 तेषां (for चैव). — d) M6-8 किन्तुनारश्च षो°. Some MSS. षोडश.

44 G5 om. 44. — a) Ñ1.2 V1 B1m Da Dn D1.3.4 अथ प्रभू°; Ñ3 B D2 अत: प्रसू° (Ñ3 B1 प्रभू°). — c) K0.2 G1 अनु°. Ñ V1 Dn M3 °द्यां मनुं वंशां; B (except B3) Da2 D1.2.4 °द्यामनुवंशां; D3 °मनुविशां; T1 °ममदितां; T2 °मनपगां; G3 °मनवशां; G4 °मनुप्रागां; G6 °नुपगमां; M5 °मनुवंशां. — d) K1 अनूनां वरुणां प्रि°; Ñ V1 B1.3.6 D (except D4.5) T G4 M असुरां (M5 अनूनां) मार्गण(B1 Da °णां)प्रि°; B4 °मरुणप्रि°; B5 अनुनामारुणप्रि°; G1-3.6 M8 (*inf. lin.*) मदि(G3 °न्दि)रां मार्गणप्रि°. — e) Ñ1 V1 Dn D5 अरूपां; Ñ2 सुरू°; T G3.4.6 °नलां; G1 °नीलां; G2 °निलां; M3.5 अन°; M6 °रवां; M7 °नवां. D5 तस्या:; T2 G3.4.6 M भासां. Ñ3 असषा सुभगा चार्पा(!). — f) G3 पुत्री (for इति). K2 D5 प्राच्यां; K4 प्राज्यां; Ñ V1 B Da Dn D1-4 प्राधा (Ñ3 Da1 °धी); G1-3 भार्सी; G4 क्रोधा; M6-8 प्रापा. K1 इति वाप्यजायत (sic); T2 °ति प्रावाप्य भारत.

45 G5 om. 45. — a) K2.4 T G1.2.4.6 M3 सिद्धि:. G1 पूर्णिश्च; M3 पूर्णो°; M5 पूर्णा च. K3 वह्नी च; Ñ1.2 V1

C. 1. 2555
B. 1. 65. 47
K. 1. 65. 47

विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ।
इत्येते देवगन्धर्वाः प्रावेयाः परिकीर्तिताः ॥ ४६
इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ।
प्रावासूत महाभागा देवी देवर्षितः पुरा ॥ ४७
अलंबुसा मिश्रकेशी विद्युत्पर्णा तुलानघा ।
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ॥ ४८
असिता च सुबाहुश्च सुव्रता सुभुजा तथा ।
सुप्रिया चातिबाहुश्च विख्यातौ च हहाहुहू ।
तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥ ४९
अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा ।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ॥ ५०
इति ते सर्वभूतानां संभवः कथितो मया ।
यथावत्परिसंख्यातो गन्धर्वाप्सरसां तथा ॥ ५१
भुजगानां सुपर्णानां रुद्राणां मरुतां तथा ।
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम् ॥५२
आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः ।
श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥ ५३
इमं तु वंशं नियमेन यः पठे-

---

T3 बर्हिश्च; Ñ3 D3 बर्हा च; D5 वार्धी च; M3.5 वाही च. M6–8 सिद्धिः पूर्णाश्वबाही च. — b) K1 Ñ2 V1 B4.6 Dn D1.4 पूर्णायुश्च; Ñ1 °र्णेश°; Ñ3 °र्णाशस्य; B1.5 Da T M3 °र्णांश°; D2.5 °र्णश°; G1.4 °र्णा(G4 °र्णः) पंच; G2 °र्णाश्वश्च; G3 °र्णश्मश्रू. K1 तथावशः (for महायशाः). M6–8 पूर्णायुरनघस्तथा. — c) Ko.2.4 D5 त्रिगुणवान्; B4.5 च त्रिगुणः. — d) Ko.2.4 T G1.2 सत्तमः (K3 G1.2 °म).

46 G5 om. 46. — b) S (except M3.5; G5 om.) सुभद्रो. — d) K2 शिष्टायाः; Ñ1.2 B1.3.4 Dn D4 प्राधा°; Ñ3 G1 प्राचे°; V1 B4 m.5.6 Da2 D1.2 प्राधे°; Da1 वरिष्टाः; D3 G2.4 प्रौवे°; T1 G3 प्राले°; M5-8 प्रापे°: T2 G6 M3 as in text (cf. v. l. 12). Ko.1.3.4 वरिष्टायाः प्रकी°; D5 अरिष्टेयाः प्रकी°.

47 G5 om. 47. — a) T2 G3.4.6 इदं. G1.2 च (for तु). — b) T G4 M (except M3) प्रथितं. G3 सप्रमाणोपलक्षणं. — c) K1 प्राच्यसूत; K2.4 Ñ2 B D प्राधा(Da1 प्राचा; D3 रिष्ठा)सू°; Ñ1 प्रासूयत; Ñ3 प्रसूता हि; V1 असूयत; T2 अष्टावेव; G4 वरिष्टा तु; G6 अरिष्टा सु°; M प्रापासू°. T1 G1–3 अरि(T1 आदि)ष्टासूत सुभगा. — d) T2 दिवि देव°. V1 वरिष्ठा देवपूजिता; G3 देव देवऋषीत्पु°. — After 47, D5 ins.:

539* मेनका सहजन्या च पर्णिना पुञ्जकस्तथा ।
घृतस्थला घृताची च विश्वासी चोर्वशी तथा ।

and after it repeats $47^{cd}$ (with slight variation), the usual indication of interpolation.

48 G5 om. 48. — a) Ñ V1 B D (except D3) °बुषा. G3 अश्रुभुस्सा बभ्रुकेशी. — b) Ñ3 विद्युत्कर्णा; S (except T2; G5 om.) °द्युद्व(G1 °च)र्णा. Ñ2.3 V1 B4 (m as in text).5.6 m D (except D2.5) G1.2 M तिलोत्तमा; G4 sup. lin. °नखा. — After $48^{ab}$, D3 reads 50.

49 G5 om. 49. — a) Ñ2 Da Dn D1.3.4 केशिनी; B1.4 शासिनी; B3.5 शालिनी; B6 शाशिनी; D2 सासिनी. Ñ3 M6 सुबाहू च. — K2 (hapl.) om. $49^{bc}$. — b) G1.2 सुप्रीता. K1 सुव्रजा; G3 सुप्रजा. Ñ2 B Da Dn D1.2.4 M3 सुरता सुरजा तथा; D5 सुप्रभा सुभजा त°. — c) Ko.1.3 V1 D5 °या च सुबाहु(V1 °बंधु)श्च; K4 लघुप्रिया चातिबाहु; T G2.4.6 हं(T2 अं)सो ज्येष्ठस्त्व(T2 °स्तु)रिष्टायाः; G1.3 हा (G3 हं)सो ज्येष्ठस्त्वरिष्टश्च; M3.5 सुप्रियो ज्ञातिबाहुश्च. — d) Ko.2.3 विश्रुतौ. K2.4 हहाहुहुं; K3 Ñ1 V1 D5 G1.3 M3.5 °हुहूः; Ñ2 B3–5 Dn2 हाहाहूहूः; B1 m.6 Dn1 D1.3.4 हाहाहूहु; Da1 Dn3 °हुहुः; D2 T2 M6.7 °हूहू; T1 हुहावहु; G6 महाहनुः. G2 °तौ हुतभुक् प्रिया; G4 °तौ भारभूप्रिया. — After $49^{d}$, G2.4 ins.:

540* जानीबाहुश्च विख्याता हाहाहूहूः पुनस्तथा ।

— ef) MSS. indiscriminately तुंबुरु°, तुंबर°, and तुंबरु°. K2.4 T G1–4 M °श्चैव. Ñ2 विख्याताः; G1 गानश्च; G2.3 नागा(G3 °ग)श्च (for चत्वारः). G6 हाहाहूहू तुंबुरुश्च चत्वारो गर्वसत्तमाः(!).

50 G5 om. 50. D3 reads 50 after $48^{ab}$.

51 G5 resumes (cf. v. l. 24). — a) G1.2.6 सर्वे देवानां. G3 एतेषामेव भू°. — After $51^{ab}$, G3 reads (for the first time) $53^{cd}$ according to the S version of the line (with चैतन्नसूयया for चैवा°). — c) K1 B1.6 D (except D2) संपरिख्यातो.

52 a) MSS. indiscriminately भुजंगा° and भुजगा°. — b) G4.5 सुराणां म°. T G1–3.6 असुराणां तथैव च. — c) G4.5 भवं च ब्रा°.

53 abc) S आयुष्यं चैव °ण्यं च °न्यं °वहं । श्रोतव्यं चैव etc. — d) Cf. 1. 61. $101^{d}$. K Ñ3 D5 ग्राह्यश्चैव; B6 श्रव्यश्चै°; S श्राव्यं (G1.3 ग्राह्यं) चै°. K1 D1 T G M3 (inf. lin. as in text) °सूयया. For G3 cf. also v. l. 51.

54 b) K1 Ñ2.3 V1 G4.5 ब्राह्मणवैश्यसंनिधौ; K4 °णसंनिधौ शुचिः; B M3.5 Nilp °णवैश्यसं°; D5 °णवंशसं°;

न्महात्मनां ब्राह्मणदेवसंनिधौ ।
अपत्यलाभं लभते स पुष्कलं
श्रियं यशः प्रेत्य च शोभनां गतिम् ॥ ५४

इति श्रीमहाभारते आदिपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## ६०

वैशंपायन उवाच ।
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
एकादश सुताः स्थाणोः ख्याताः परममानसाः ॥१
मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतपः ॥ २
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भवश्च भगवान्रुद्रा एकादश स्मृताः ॥ ३
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥ ४
त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥ ५
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥ ६
राक्षसास्तु पुलस्त्यस्य वानराः किंनरास्तथा ।
पुलहस्य मृगाः सिंहा व्याघ्राः किंपुरुषास्तथा ॥ ७
क्रतोः क्रतुसमाः पुत्राः पतंगसहचारिणः ।

C. 1. 2673
B. 1. 66. 9
K. 1. 67. 9

---

G6 °णव्रर्यसं°; M6–8 द्विजजनमुख्यसंसदि. — $^{c}$) K0–2.4 Ñ3 D5 °भं स लभेत. K3 तु; Da1 G1.3.6 च (for स). D2.3 T1 G पुष्कलां. — $^{d}$) G5.6 प्रियं. K Ñ1.3 D5 मतिं; G1.3 नरः (for यशः). G1.3 च पुष्कलां ग°.

Colophon. Missing in Ś1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K0.2–4 Ñ3 V1 B Da Dn1.n2 D1.2.4.5 T2 G2.4 M6–8 Cd अंशावतरण; Ñ1 वंशावतरण; Ñ2 D3 T1 संभव. — *Adhy. name:* K3 कृष्णद्वैपायनोत्पत्तिः; Ñ1.2 V1 आदित्यादिवंशकथनं; T2 G4 सुरसंभवः; G1 देवादिसंभवः; M6–8 असुरसंभवः. — *Adhy. no.* (figures, words or both): K0 60; K1 74; K3 *sup. lin. sec. m.* 54; Ñ1.2 V1 65; Da1 62; Dn3 64; D3 66; D4 63; T1 57; T2 G4.5 M 7; G1–3 9; G6 8. — *S'loka no.:* Ñ3 60; Da1 Dn 56. — *Aggregate s'loka no.:* Dn2 2540.

## 60

☞ In Ś1, st. 1–61$^{b}$ are missing (cf. v. l. 1. 55. 3).

1 K1 D2.5 S om. उवाच. — $^{ab}$)=1. 59. 10$^{ab}$. — $^{cd}$) Da स्मृताः (for सुताः). K0.3 Ñ2 V1 B D परमतेजसः. S एकादश तथा रुद्राः स्थाणोश्चैवेति (G2.4.5 °श्चैव तु) मानसाः.

2 $^{a}$) K1.3 B D M5 सर्प(D5 °र्व)श्च; M6–8 गर्वश्च. — $^{b}$) K1 निनृतिश्च; K4 निकृ°; T2 निवृ°; G1 निवृत्ति°; G2.4–6 निर्वृ°; G3 शंभुश्चैव. — $^{c}$) K0.2.3 B6 Dn1 °र्बुध्नः; B1 (m as in text).3–5 D5 °ब्ने(B3.5 D5 °ध्न)ध्नः; M (except M3) °र्बुध्निः. — $^{d}$) G1.3 च महायशाः.

3 K1 वहनोथे°; Ñ3 वहनो पुष्कलश्चैव; D5 मदनोथे°; T G1 M3 भवनोथे° (T1 °धी°); G2–5 गण(G3 भव)नाथे°; G6 भवनश्चे°; M5 हवनोथे°. — $^{b}$) M5 महायशाः. — $^{c}$) Ñ1.2 V1 B1 (m as in text).3.4.6 D (except Da D3) T1 G1 °भंगश्च. — $^{d}$) G1.4.5 M3 रुद्रास्त्वेका°.

4 K1 (? hapl.) om. 4–5$^{ab}$. — $^{a}$) K0.2.4 D5 G1.2.6 °राश्चात्रिः; K3 °रा ह्यत्रिः; Ñ3 M °राथात्रिः; G4.5 °रा धात्री.

5 $^{ab}$) K1 om. 5$^{ab}$ (cf. v. l. 4). Ñ1.3 G3 तत्र पुत्राः; G1 पुत्रास्तत्र (for पुत्रा लोके). K (K1 om.) ख्याताः (for लोके). K0.2.4 °त्र पूजिताः. — K2 reads 5$^{cd}$ in marg. — $^{c}$) D3 S उचथ्यश्च (M3 च धृष्णुश्च; *inf. lin.* धिष्ण्यश्च). — $^{d}$) K0 वृष्णिश्चैव; K1 corrupt; K3 m.4 V1 धृष्ट(K4 °ष्णु)श्चेति; K3 धृष्टश्चैव; Ñ1 मुहूर्तश्च; Ñ3 G4–6 धृष्ण्य(Ñ3 °ष्ण)श्चेति (for संवर्तश्च). K0 D2–4 धृतव्रतः; K4 यत°; T G1–3 M3.5 महातपाः; G4–6 दृढव्रताः(G6 °तः).

6 $^{a}$) Da G1.3 च (for तु). K Ñ3 D5 अत्रेः (D5 अत्रि-) पुत्रास्तु बहवः. — $^{c}$) G2.4.6 °दः शुद्धाः.

7 $^{a}$) K0.2.4 Ñ1.2 B4–6 D (except D5) च (for तु). D3 पुलस्त्याश्च. — After 7$^{ab}$, Ñ V1 B D ins.:

541* यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः ।
[ V1 B °व्याघ्रा त्वं (V1 B4.5 °त्यास्) तस्य. ]

— $^{cd}$) T2 G4–6 यक्षा महामृगाः (for किंपुरुषास्तथा). T1 पुलहस्य मृगव्याघ्रा यक्षा ईहामृगा वृकाः. — For 7$^{cd}$, N

C. 1. 2573
B. 1. 60. 9
K. 1. 67. 9

विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ ८
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ।
ब्रह्मणः पृथिवीपाल पुत्रः पुत्रवतां वरः ॥ ९
वामादजायताङ्गुष्ठाद्भार्या तस्य महात्मनः ।
तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः ॥ १०
ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः ।
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥ ११
ददौ स दश धर्माय सप्तविंशतिमिन्दवे ।
दिव्येन विधिना राजन्कश्यपाय त्रयोदश ॥ १२
नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ १३
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ।
द्वाराण्येतानि धर्मस्य विहितानि स्वयंभुवा ॥ १४
सप्तविंशति सोमस्य पत्न्यो लोके परिश्रुताः ।
कालस्य नयने युक्ताः सोमपत्न्यः शुभव्रताः ।
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधौ स्थिताः ॥ १५
पितामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः ।
तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् ॥ १६
धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥ १७
धूम्रायाश्च धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ।
चन्द्रमास्तु मनस्विन्याः श्वसायाः श्वसनस्तथा ॥ १८

---

(Ś1 missing; K1.2.4 om. line 1) subst.:

542* पुलहस्य सुता राजञ्शरभाश्च प्रकीर्तिताः ।
सिंहाः किंपुरुषा व्याघ्रा ऋक्षा ईहामृगास्तथा ।

[ (L. 1) K0.3 सरभास्तु; Ñ1.2 Dn D1 शलभा°. B D2.5 परिकी° (for च प्रकी°). — (L. 2) Ñ1 B4 Dn D1.2.4 यक्षा (for ऋक्षा). ]

— After $7^{cd}$, M5 ins. line 2 of 542* above, reading °वृताः for °स्तथा.

8 The second half of the st. is mentioned by Arj. in his comm. as a *pāṭha*, but owing to the corrupt condition of the MSS., the true reading of Arj. cannot be ascertained.

9 K4 reads $9^{b}$–$10^{a}$ in marg. (*sec. m.*). — $^{ab}$) S अंगुष्ठाद्दक्षिणाद्दक्ष उत्पन्नो भग°. — D3 om. $9^{c}$–$10^{d}$. — $^{c}$) K4 सुमहीपालः. — $^{d}$) K1 T वरः; G3 वृतः. K4 Ñ1.2 V1 B D (except D5; D3 om.) शांतात्मा सुमहातपाः (K4 °यशाः). Cd has पुत्रवतां वरः, so Dev. read probably as in text!

10 For K4 D3 (which om. 10) cf. v.l. 9. — $^{ab}$) K (except K4) D5 वामात्स्वजा°; Ñ3 वामात्प्रजा°. S महर्षेस्तस्य भार्या तु वामांगुष्ठादजायत. — $^{c}$) M5 पंचाशत्कन्यकास्तस्याः — $^{d}$) S °यत्प्रभुः.

11 $^{a}$) G1.3 transp. ताः and सर्वाः. K2.4 om. तु. — $^{d}$) G2 स्रष्टुं; G4.5 स्रष्टुः; G6 सुष्टु (for नष्ट-).

12 =(var.) Manu 9. 129. — $^{a}$) Ñ3 transp. ददौ and स. B6 D2 G (except G1.3) M transp. स and दश. — $^{b}$) K0.3.4 B3–5 Da1 D1.4 (before corr.) सप्तार्विं°. — G3 transp. $12^{b}$ and $12^{d}$. — S (mostly) काश्यप- for कश्यप-.

13 D3 (? hapl.) om. 13–$14^{ab}$. — $^{a}$) G1.3 M5 °पत्नीस्ताः. — $^{b}$) D2 reads $13^{b}$ in marg. G2.4.5 वै (for मे). — $^{cd}$) K1 transp. कीर्तिः and लक्ष्मीः. G3 तथा (for धृतिर्). K (except K4) transp. मेधा and पुष्टिः. B1m Da1m Cd कृपा तथा. Ñ3 S (except G4) transp. क्रिया and तथा.

14 D3 om. $14^{ab}$. — $^{b}$) K3 Ñ1 भारत (for ता दश). — $^{c}$) D3 दारास्त्वेतानि ध°; S भार्या ह्येताश्च ध°. — $^{d}$) D3 T G विहिताश्च; M3.5 °तास्ता[ः]; M6–8 °ता हि.

15 $^{a}$) K3.4 Da Dn1 B3.5 D4 सप्त- (for सप्त-). K Ñ1.2 V1 B (except B5) D2 T2 -विंशतिः; Ñ3 -विंशत्तु. K0.2.4 इंदोश्च; K3 B (except B5) D2 इंदोस्तु. — $^{b}$) Ñ1.3 B (except B5) T1 G1.3.6 M6–8 लोकपरि°; Ñ2 V1 Da Dn D1.4 T2 लोकस्य(Dn1 °केषु) विश्रु°. K1 लोकपत्न्याः परिश्रुताः. — $^{d}$) Ñ3 S (except M5) धर्मपत्न्यः. K3 समप्रभाः; Ñ1.2 V1 B D (except D5) G2.4–6 शुचिव्र(D3 °स्मि)ताः; G3 श्रुतव्रताः. — M5 om. $15^{e}$–$16^{a}$. — $^{e}$) M (M5 om.) नक्षत्रनामिन्यो; Cd (corrupt) probably same as in text. — $^{f}$) Ñ3 D5 °विधौ स्मृताः; V1 B Da Dn D1.2.4 °विधानतः.

16 $^{a}$) M5 om. $16^{a}$. Ñ V1 B D (except D5) पैतामहो; G4.6 °महात्. B3 Da2 D4 मनुर्दे°; B5 मुनिर्दिव्यः. — $^{c}$) Da अस्याष्टौ; M5 कन्याष्टौ. — $^{d}$) K0.2.3 °मि लक्षणं.

17 $^{a}$) D5 transp. धरः and ध्रुवः. G (except G1.3) ध्रुवश्चंद्रमाश्च. — $^{b}$) S आपश्चैवा°. Ñ3 B6 D1 G2.6 M7.8 transp. अनिलः and अनलः. — K2 G3 om. $17^{cd}$. — $^{c}$) D3 M8 प्रभावश्च; T1 °तश्च (for प्रभा°). — $^{d}$) Ñ3 °वो नामभिः स्मृताः; G1.5 °वोष्टौ प्रकीर्तिताः.

18 K2 om. 18–$19^{ab}$; G3 om. 18–20; G5 om. 18–19.

रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः ।
प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ ॥ १९
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ २०
सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते ।
मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥ २१
अह्नः सुतः स्मृतो ज्योतिः श्रमः शान्तस्तथा मुनिः ।
अग्नेः पुत्रः कुमारस्तु श्रीमाञ्शरवणालयः ॥ २२
तस्य शाखो विशाखश्च नैगमेशश्च पृष्ठजः ।
कृत्तिकाभ्युपपत्तेश्च कार्तिकेय इति स्मृतः ॥ २३
अनिलस्य शिवा भार्या तस्याः पुत्रः पुरोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ २४
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ २५
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्सर्वमसक्तं विचरत्युत ।
प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह ॥ २६
विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः ।

C. 1. 2502
B. 1. 60. 28
K. 1. 67. 28

— a) Ñ1.2 V1 B D तु (for च). — b) M ब्रह्मवैद्यो. T G (G3.5 om.) °त्रिद्यासुतो ध्रुवः. — c) T G (G3.5 om.) च (for तु). — d) Ko.4 B1.5.6 Da1 Dn D3 श्वासायाः; Ñ3 D1.2 स्व°; T1 श्वासायां. M6–8 सुतः (for तथा).

19 K2 om. $19^{ab}$; D3 G3.5 om. 19 (cf. v. l. 18). — a) Ko.3.4 तारायाश्चा°; Ñ1 रतायां वै धरः पु°; Ñ3 रत्यायाश्च हरः पु°; D1 एलायाश्चा°; T G (G3.5 om.) M6–8 रसायाश्च रसः पु°; M3.5 आपो रसायाः पुत्रश्चं. — b) T G2.4.6 M5 शांडिल्यायाः; M6–8 °ल्यायां. — d) Ko.2.4 D5 G1.2 M6–8 प्रभायाश्च; K1 G4 °वायाः; K3 M3 °यास्तु; Ñ3 T G6 °सायाः. K मतौ; G1.2 उभौ (for स्मृतौ). M5 प्रभापायास्तुतौ स्मृ° (sic).

20 D3 om. $20^{ab}$; G3 om. 20 (cf. v. l. 18). — After $20^{ab}$, S (except G3) ins.:

543* आपस्य पुत्रो वैतण्ड्यः श्रमश्रान्तो मुनिस्तथा ।

[ Cf. $22^{ab}$. — G4.5 वातन्ध्यः; G6 वातस्य; M6–8 वैतण्यः. G1.2 शमः शांतो; G4 समशांतो; G6 श्रुतः श्रांतो. M6–8 द्युतिस्तथा. ]

— d) G1.2.4 लोकालोक°. D5 °प्रतापनः; G4–6 °प्रकाश°. T लोकालोकप्रकाशनः.

21 a) Da2 Dn3 D3 M6–8 च (for तु). Ñ3 भगवान् (*sup. lin. sec. m.* तु सुतो as in text). — c) V1 मनोरमायाः. — d) K2 T1 G3.4 (*sup. lin.* as in text) M3 मरणस्तथा.

22 a) T2 (*inf. lin.* as in text) G (except G3) अग्नेः; M वह्नेः (for अह्नः). K4 G6 transp. सुतः and स्मृतः. B D (except D5) सुतस्तथा; T G3 सुतस्ततो. — b) Ko G (except G3) श्रुतः; Ñ V1 B D T शमः (D1 समः; D5 as in text) (for श्रमः). Ko G (except G1.3) M6–8 श्रांतो. B4 तमो; T2 तदा (for तथा). M6–8 transp. तथा and मुनिः. — c) Ko.2.3 अग्निपुत्रः. Ko D3 G1–3 च (for तु). — d) Ñ1 श्रीमाञ्शरणालयः; D5 शरस्तंबादजायत.

23 a) G3 तस्य राजा त्रिशालश्च. — b) Ñ1.2 V1 B D T2 नैगमेयश्च; Ñ3 T1 G M नैग(G3 °ज)मेष(G4 °षि)श्च. Ko.2.3 D2.3 पृष्ठजाः; K4 पूर्व°; B6 D4 T1 G6 पृष्ठतः; T2 G4.5 (*inf. lin.* as in text) वृष्णि°; G2 वृष्टि°. — c) D5 °काभ्योभवचेन; T corrupt; G1 °कास्तनपाश्चैव; G2.3 °कात(G3 °स्त)नयश्चैव; G4 °काभ्यवपत्तेश्च; G5.6 °कास्तन्यपानैश्च.

24 b) Ko.3.4 Ñ1.2 V1 B1.3.5.6 D (except D5) मनोजवः; Ñ3 T1 परो जवः; T2 G4.5 °वहः; G3 °जकः; G6 °वयः; M5 °शहः. B4 वसूनामष्टमस्य ह. — After $24^{ab}$, B4 ins.:

544* विश्वकर्मा महाभागो तस्य पुत्रो मनोजवः ।

(cf. $27^{ab}$). — c) K1 °गतिश्चेति. — d) K (except K1) B4 G (except G3.5) च (for तु).

25 a) T G (except G3) M3.5 प्रत्यूषसो. K (except K3) D5 दिवः (for विदुः). K (except K3) G (except G1) पुत्रः. — b) Ko.2.4 G3.6 ऋषिः. T1 नारद- (for नाम्नाथ). Ñ3 अपि; D5 G6 M6–8 तु; G1.2 च (for अथ). K (except K3) G देवलः. — c) B (except B1) Da D2 transp. द्वौ and पुत्रौ. G3 अथ (for अपि). — d) K D3 M5 मन(K2.4 तप)स्विनौ (for मनी°). — After 25, M5 ins.:

545* शङ्खश्च लिखितश्चैव सर्वशास्त्रविशारदौ ।

26 b) Ñ1.2 V1 B D ब्रह्मवादिनी (B4m वरवर्णिनी); G3 योगचा°. — c) K3 योगयुक्ता; Da1 Dn D4 °सक्ता. Ñ V1 B D कृत्स्नम् (for सर्वम्). — d) Ñ1.2 V1 B Dn D1.2.4 T1 G2 M6.8 असक्ता; Ñ3 अशक्तं; D3.5 M7 अशक्ता; G1 शक्तापि. Ñ1.2 V1 B D (except D5) विचचार ह; G1.2 °चरंत्यु°. — e) Ko.3 Ñ1 D5 भार्या या; K2.4 T1 G2.4.5 M3 भार्यायां; B4.5 या भार्या. — f) D3 G6 च; T G1–5 M तु (for ह). — After 26, T G (except

C. 1. 2502
B. 1. 66. 26
K. 1. 67. 28

कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः ॥ २७
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।
यो दिव्यानि विमानानि देवतानां चकार ह ॥ २८
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययम् ॥ २९
स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः ।
निःसृतो भगवान्धर्मः सर्वलोकसुखावहः ॥ ३०
त्रयस्तस्य वराः पुत्राः सर्वभूतमनोहराः ।
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ३१
कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना ।
नन्दी तु भार्या हर्षस्य यत्र लोकाः प्रतिष्ठिताः ॥ ३२
मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः ।
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ३३
त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी ।
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ ३४
द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ।
तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ ३५
त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव ।
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ ३६
रुद्राणामपरः पक्षः साध्यानां मरुतां तथा ।
वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ ३७
वैनतेयस्तु गरुडो बलवानरुणस्तथा ।
बृहस्पतिश्च भगवानादित्येष्वेव गण्यते ॥ ३८
अश्विभ्यां गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।
एष देवगणो राजन्कीर्तितस्तेऽनुपूर्वशः ।
यं कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ॥ ३९
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः ।
भृगोः पुत्रः कविर्विद्वाञ्शुक्रः कविसुतो ग्रहः ॥ ४०
त्रैलोक्यप्राणयात्रार्थे वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ॥ ४१

---

G4.5) ins.:

546* प्रासूत विश्वकर्माणं सर्वशिल्पवतां वरम् ।
[ G1.3 प्रसूता. T शिल्पिक°. ]

27 b) Ñ3 G2.4.5 शिल्पी; B यस्यां; D2 T G6 शिल्पि-; D5 तस्यां. — d) K3 D1 M (except M5) वार्धकिः; D2 वार्धिकेः; D5 वार्धिकः; G3.6 °की.

28 b) G M सर्व(M8 शिल्प)विदां. — Da1 om. 28c–29b. — c) G1-3 सर्वेषां च वि°. — d) Ñ2 V1 Da2 Dn D1.3.4 G3 M6-8 त्रिदशानां. G3 यः (for ह).

29 Da1 om. 29ab (cf. v. l. 28). — a) M मानुषाश्चोप°. — b) B4 T G तस्य. — c) T G6 तं (for यं).

30 b) S °णः पुरुषोत्तमः (G6 परमेष्ठिनः). — d) K4 °भयापहः; Ñ1.2 B Da T2 °पितामहः.

31 b) Ñ1 सर्वलोक°; G (except G4.5) °मनोरमाः. — d) Da D3 लोकधारणाः. T1 M5 मनःप्रीतिविवर्धनाः; G1-3 M3.6-8 मनसः प्रीतिवर्धनाः.

32 a) K1 च (for तु). — b) K4 D3 S (except M5) प्रीतिर् (for प्राप्तिर्). G3 M (except M5) एव च (for अङ्गना). — c) Ñ3 B3 Da1 Dn D1 नंदा. — d) Ñ V1 B D (except D5) यासु (for यत्र). K1 लोकयात्रा प्र°.

33 b) Ñ3 कश्यपाच्च; M6-8 °पात्तु. G3 सुताः सुराः; M6-8 प्रजा इमाः (cf. 1. 59. 11b). — c) K2 राजशार्दूल. — d) K D2.5 प्रभविष्णवः. G3 लोकनाथा महात्मनः.

34 c) G3 M8 प्रासूयत. — d) Some B° MSS. °रीक्षे. G2 M6-8 °श्विनावपि.

36 a) Ko.2-4 °स्त्रिंशत्तु; K1 D5 T1 G6 M Cd °स्त्रिंशतम्.

37 a) B (except B6) D3 T2 G2 अवरः; G1 अभवत् (for अपरः). — b) K (except K1) °नामपरस्तथा. — c) M5 भार्गवो वंशो. — d) K (except K1) B5 D2-4 G2.3 M °देवास्त°.

38 a) Da D3 च (for तु). — c) T1 G1-3 M6-8 तु (for च). G1.5 बलवान्. — d) K1 °व कथ्यते.

39 a) K2 Ñ1.2 V1 Da1 Dn D1-4 अश्विनौ; B Da2 °नोर्; D5 °न्यां. G3 गुह्यकाः सिद्धाः. — b) D5 साध्यौषध्यस्. G6 transp. तथा and पशून्. K1 पश्च(read पशू)न्सर्वौषधीस्तथा. — Ñ1 reads 39c–66d after 1. 61. 26ab. — c) G (except G3.6) M3 एवं (for एष). Ñ1.3 V1 B D (except D5) M8 एते देवगणाः. — d) Ñ V1 B D (except D5) कीर्तितास्. — e) Ñ3 B Da2 D3 T2 G3.5.6 यत्; Dn D1.4 G4 यान् (for यं). Da1 कीर्तयित्वा च म°. — f) G2.4.5 प्रजामिष्टामवाप्नुयात्.

40 b) G M8 निर्गतो. Da2 विभुः; D3 T1 G2 प्रभुः (for भृगुः). — c) B1.3.6 D2 भृगुपुत्रः. K1-3 Ñ3 T1 M3.5 कवि ऋषिः; D5 कविरिति; T2 G M6-8 कविर्विप्रः. Ko.4 भृगोः कवि ऋषिः पुत्रः. — d) Ñ3 शुक्रस्त्वृषिसुतो. K1 वरः; S स्मृतः (for ग्रहः).

C. 1. 2944 B. 1. 72. 8 K. 1. 93. 8

तौ तत्र सुचिरं कालं वने व्यहरतामुभौ ।
रममाणौ यथाकामं यथैकदिवसं तथा ॥ ७
जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ ८
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ ९
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ॥ १०
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥ ११
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जने विपिनेऽरण्ये शकुन्तैः परिवारिताम् ।
आनयित्वा ततश्चैनां दुहितृत्वे न्ययोजयम् ॥ १२
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ।

---

— $^b$) T2 G2.4.5 चाप्येनम्. G6 साप्यैच्छत्तमनिं°. — $^c$) K0.4 तौ तु तत्र चिरं कालं; G2.4.5 तौ तु द्वौ तत्र सुचिरं. — $^d$) Ñ2 V1 B D (except D5) उभौ (for वने) and तदा (for उभौ). K (except K1) विहर°. S (M5 om.) विजह्राते महावने. — After 7, D4 S (G3 om. lines 3–6; M5 om. 1–3) ins.:

602* एवं वर्षसहस्राणामतीतं नाभ्यचिन्तयत् ।
कामक्रोधावजितवान्मुनिर्नित्यं क्षमान्वितः ।
चिरार्जितस्य तपसः क्षयं स कृतवानृषिः ।
तपसः संक्षयादेव मुनिर्मोहं विवेश सः ।
मोहाभिभूतः क्रोधात्मा प्रसन्मूलफलं मुनिः । [5]
पादैर्जलरयं कृत्वा अन्तर्द्वीपे कुटीं गतः ।
मेनका गन्तुकामा वै शुश्राव जलनिस्वनम् ।
तपसा दीप्तवीर्योऽसावाकाशादेति याति च ।
अद्य संज्ञां विजानामि येन केन तपःक्षयम् ।
हन्त निर्यामि चेत्युक्त्वा ऋतुस्नाता तु मेनका । [10]
कामरागाभिभूतस्य मुनेः पार्श्वं जगाम सा ।

[ (L. 1) M (M5 om.) एकं वर्षसहस्रं तत्. — (L. 2) G1.2 °क्रोधान्वर्जित°; G3 °क्रोधौ च जित°. D4 समाहितः; G3 M3 तपोन्वितः. — (L. 4) T1 मतिमोहं. D4 G1.2.6 समाविशत्. — (L. 5) G6 ययौ तां कौशिकीं मुनिः. — (L. 8) M5–7 °वीर्यौजा. — (L. 9) G1.4 M विजानाति. D4 यथास्य तपसः क्षयः; M3.5 चिरस्य तपसः क्ष°. — (L. 10) D4 गंतुं न युक्तमित्युक्त्वा; T G3.6 M3.5 हंत निर्युक्तमित्युक्त्वा. ]

8 $^a$) T2 G4.5 च (for स). — G6 om. $8^c$–$9^b$. — $^c$) K (except K2) D5 पृष्ठे हिम°. — After 8, D4 S (except G6) ins.:

603* देवगर्भोपमां बलां सर्वाभरणभूषिताम् ।
शयानां शयने रम्ये मेनका वाक्यमब्रवीत् ।
महर्षेरुग्रतपसस्तेजस्त्वमविनाशिनी ।
तस्मात्स्वर्गं गमिष्यामि देवकार्यार्थमागता ।

[ (L. 2) D4 शयानं बालमुत्सृज्य. — (L. 3) D4 G2.4 °स्त्वमसि भामिनि. ]

9 G6 om. $9^{ab}$ (cf. v. l. 8). Before 9, T2 G3–5 M ins. कण्वः (cf. 603*). — $^a$) T2 G2.4.5 °अथ त कन्यां. — $^b$) S (G6 om.) °नीं प्रति. — $^{cd}$) K1.2 D1 °नैमागच्छ°. K3 B4.5 D2 °संसदि. S शक्रसंसदमागच्छत्कृत्वा कार्यं शचीपतेः.

10 $^a$) S गहने (for विज°). — $^b$) S °निषेविते. — $^d$) D4 समेताः पर्य°.

11 $^a$) B3 नैनां; B6 मैनां (for नेमां). S transp. हिंस्युः and बालां. — $^b$) K2 B3 D1.2 °गृध्रिणः; T1 G4–6 °गर्धि°; T2 °गृध्नवः; G1.2 °गंधि°; G3 गृध्नुना. — $^c$) K0.3 पर्यरक्षंस्ततस्; K1 °वर्तत तां; K2 °रक्षंति ते. S इति मत्वा स्म रक्षंति. — $^d$) K3 शकुना.

12 Before 12, K0 ins. कण्व उ°. — $^b$) D5 अपश्यत्स पिता मम; S तामपश्यमनिंदितां (G2 °मतंद्रितां; M5 अपश्यं मेनकात्मजां). — After $12^{ab}$, D4 (marg.) S ins.:

604* मां दृष्ट्वाभ्यपद्यन्त पादयोः पतिता द्विजाः ।
अब्रुवञ्शकुनाः सर्वे कलं मधुरभाषिणः ।
विश्वामित्रसुतां ब्रह्मन्न्यासभूतां भरस्व वै ।
कामक्रोधावजितवान्सखा ते कौशिकीं गतः ।
तस्मात्पोषय पुत्रीं ते दयावन्निति तेऽब्रुवन् । [5]
सर्वभूतरुतज्ञोऽहं दयावान्सर्वजन्तुषु ।

[ (L. 1) G1.3.6 °बान्धव°. — (L. 2) D4 पक्षिणः G4.5 द्विजाः (for शकुनाः). — (L. 3) G2.4.5 भजस्व. — (L. 4) T G1.2.4.5 कौशिको. — (L. 5) D4 T1 तत्पुत्रीं (for पुत्रीं ते). — After line 6, D4 repeats $12^{ab}$. ]

— $^c$) B D1.4 निर्जनेपि (B1 °ने च) वने; D3 °नोपवने. K1 रम्यां; Ñ1.2 V1 B D (except D5) M3 रम्ये; Ñ3 शून्ये (for ऽरण्ये). T G M5–8 निर्जनेपि महारण्ये. — $^d$) K0 शकुनैः. K4 °रक्षितां. — $^e$) K1 ततश्चाहं. — $^f$) Ñ1.2 V1 B D M3 न्यवेशयं.

13 $^a$) D3 शक्रेण ते. K4 Ñ V1 B Dn D1.2.4 T2 G4 M6–8 एते (for ते). K1 अथः प्रोक्ताः. — $^d$) Ñ1.2

क्रमेण ते त्रयोऽप्युक्ताः पितरो धर्मनिश्चये ॥ १३
निर्जने च वने यस्माच्छकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥ १४
एवं दुहितरं विद्धि मम सौम्य शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥ १५
एतदाचष्ट पृष्टः सन्मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥ १६
कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन्यथावृत्तं श्रुतं मया ॥ १७

इति श्रीमहाभारते आदिपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ६७

दुःषन्त उवाच ।
सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ १
सुवर्णमाला वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ २
आहरामि तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ॥ ३
गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ ४
शकुन्तलोवाच ।
फलाहारो गतो राजन्पिता मे इत आश्रमात् ।
तं मुहूर्तं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ५

C. 1. 2959
B. 1. 73. 5
K. 1. 94. 5

---

$V_1$ B D धर्मशासने ($B_{3.6}$ °शासनात्; $D_5$ °निश्चयात्); $\tilde{N}_3$ S °साधने ($G_{2.4.5}$ °दर्शने).

14 [a]) $K_1$ निजनेसौ; $K_3$ इयं तस्मिन्; $D_5$ विजने या. $K_4$ यं; Ñ $V_1$ B D (except $D_5$) तु (for च). — [b]) $K_4$ $Da_1$ शकुनैः. $\tilde{N}_{1.2}$ $V_1$ B D (except $D_5$) परिवारिता; cf. 12[cd].

15 [a]) $K_4$ एतां; $M_7$ कृतां (for एवं). — [b]) $\tilde{N}_2$ B D (except $D_5$) विप्र; $G_3$ तात (for सौम्य). — [c]) K (except $K_1$) $B_1$ $G_6$ अपि (for च). — [d]) $D_5$ मां ह्यनिंदिता.

16 Before 16, K (except $K_2$) B (except $B_1$) Dn $D_{1.4}$ ins. शकुं° उ°; $D_5$ $G_{2-5}$ M शकुं°. — [a]) S °चष्ट भगवान्. — [b]) $K_3$ °न्म महामते. — [d]) $\tilde{N}_3$ मनुजेश्वर.

17 $K_3$ om. 17. — [b]) $K_0$ नान्यं कस्माद्विजानती. — [cd]) $K_1$ °थितं विप्रं यथा राजं (sic) श्रु°. $D_5$ यथाश्रुतं; $M_{3.5}$ मया श्रुतं (by transp.).

Colophon. *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $\tilde{N}_{1.2}$ $V_1$ $T_1$ संभव; to it $\tilde{N}_{1.2}$ $V_1$ add शकुंतलोपाख्यान. K $\tilde{N}_3$ B D $T_2$ $G_{3.4}$ $M_{3.5}$ (om. the sub-parvan name) mention only शाकुंतल. — *Adhy. name:* $T_2$ $G_4$ शकुंतलाजन्मकथनं. — *Adhy. no.* (figures, words or both): $K_0$ 63; $Da_1$ $D_4$ 70; $Dn_3$ 71; $T_1$ 84; $T_2$ 34; G M 35. — *S'loka no.:* $\tilde{N}_3$ $Da_1$ 19; $Dn_{1}$.$n_2$ 18; $M_3$ 29. — *Aggregate s'loka no.:* $Dn_2$ 2932.

### 67

☞ This adhy. is missing in $Ś_1$ and $D_3$ (cf. 1. 61. 84; 62. 2); these MSS. are *wholly* ignored here.

1 $K_0$ om. दुःषन्त उ°; S om. उ°. $K_1$ राजा; $K_{2-4}$ $\tilde{N}_3$ $D_5$ राजोवाच. — [c]) $T_1$ कल्याणि.

2 [a]) Ñ $V_1$ B D (except $D_5$) T $G_6$ M °मालां. — [b]) K (except $K_1$) $Da_1$ Cd (marg. *sec. m.*) परिहारके; $D_5$ °हाटिके; S °पादुके. — [c]) $\tilde{N}_1$ °जनपदे शुभ्रे; S °पत्त($M_{6-8}$ °ट्ट)नजैः शुभ्रैः. — [d]) S °रत्नैश्च. $T_1$ $G_1$ शोभिते; $G_2$ शोभितैः; $G_{4-6}$ °नैः; $M_{6-8}$ शोभितान्.

3 $G_3$ om. 3–5. — [b]) $B_3m$ $D_4$ S ($G_3$ om.) निष्कादीन्ययि($B_3m$ °यु)तानि च ($T_1$ $G_1$ निष्काणामयुतं तथा). — [c]) $D_4$ तवैवास्तु; S ($G_3$ om.) तवाद्य त्वं. — [d]) $T_1$ $G_1$ भार्या भव सुशोभने.

4 $G_3$ om. 4 (cf. v. l. 3). — [ab]) $\tilde{N}_3$ मे; a few S MSS. मा (for मां). $K_{1.3}$ $\tilde{N}_3$ $Dn_3$ $T_1$ $G_1$ विवाहेनैव; $G_{2.4.5}$ °हेनेह. $K_1$ शो(read शो)भने (for सुन्दरि). $K_2$ गांधर्वेण विवाहेन भीरु मामेहि सुंदरि. — [c]) $K_1$ $\tilde{N}_3$ M च; $Dn_3$ तु (for हि). M (except $M_3$) सर्वेषां (for रम्भो°).

5 $G_3$ om. 5 (cf. v. l. 3). $K_{1.3}$ S om. उवाच.

C. 1. 2960
B. 1. 73. 6
K. 1. 94. 12

दुःषन्त उवाच ।

इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥ ६
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ ७
अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥ ८
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
तेषां धर्मान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत् ॥ ९
प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ॥ १०
राज्ञां तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः ।
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ॥ ११
पैशाचश्चासुरश्चैव न कर्तव्यौ कथंचन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता ॥ १२
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥ १३
सा त्वं मम सकामस्य सकामा वरवर्णिनि ।

— a) Ko. 3 फलाहार-; K4 Ñ1 V1 B6 (m as in text) °हारे; D2 °हर्ता; T2 G4. 5 °हारात्; G2 °हारा-. — b) Ko. 2–4 Ñ3 मे स इहा(Ñ3 °तो)श्रमात्; K1 D2 मे स (D2 मम) तपोधनः; S (G3 om.) मम (M3. 5 मे स) महातपाः (T1 °यशाः). — c) Ñ1. 2 V1 B6 Da Dn D1. 4. 5 मुहूर्तं सं-; B1. 5 °र्तं त्वं; B3. 4 D2 °र्तं तु; T1 °र्तं च; G1. 6 M3. 5 त्वं मुहूर्तं. — d) A few MSS. मा (for मां). G6 M6–8 च दास्यति. — K4 D4 S ins. after 5 (G3, which om. 3–5, ins. after 2):

605* पिता हि मे प्रभुर्नित्यं दैवतं परमं मम ।
यस्य मां दास्यति पिता स मे भर्ता भविष्यति ।
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ।
अमन्यमाना राजेन्द्र पितरं मे तपस्विनम् । [5]
अधर्मेण हि धर्मिष्ठ कथं वरमुपास्महे ।
दुःषन्तः ।
मा मैवं वद सुश्रोणि तपोराशिं दयात्मकम् ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ।
अग्निर्दहति तेजोभिः सूर्यो दहति रश्मिभिः ।
राजा दहति दण्डेन ब्राह्मणो मन्युना दहेत् । [10]
क्रोधितो मन्युना हन्ति वज्रपाणिरिवासुरान् ।
जानामि भद्रे तमृषिं तस्य मन्युर्न विद्यते ।

[ (L. 1) K4 T1 G4–6 M3. 5 मतं (for मम). — (L. 2) K4 D4 यस्मै मां; G1. 2. 6 यस्य वा. T1 G1. 2 स वै. — (L. 3–4) = (var.) Manu 9. 3. — (L. 4) T2 G6 M स्थविरी-. — (L. 5) G3–5 अवमन्य (G3 °त्य) तु रा°. — (L. 6) M6–8 धर्मज्ञ. G1. 2 वनमु°; G4. 5 °मुपालभे. — (L. 7) D4 T1 कल्याणि (for सुश्रो°). — After line 8, D4 M3. 5 ins.:

606* मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान् ।
(cf. line 11). ]

6 K4 D4 S om. दुःषन्त उ° (cf. 605*). Ko. 2. 3 Ñ2 V1 B Da D1 राजोवाच; K1 D2 राजा. — b) S भज मां (G1. 2 मा; M6–8 -तां) त्वम°. — c) K (except K1) D5 त्वदर्थमाश्रि(D5 °स्थि)ता बुद्धिः. — d) Ko. 3. 4 त्वां गतं.

7 a) T1 °रात्मा वै. — b) B5 प्रभुश्चात्मैव. — After 7ab, S ins.:

607* आत्मनो मित्रमात्मैव तथा चात्मात्मनः पिता ।
[ G1. 2 M6–8 वै (for एव). M3. 5 °त्मैव शत्रुरात्मैव चात्मनः. ]

8 With 8–13 cf. Manu 3. 21–26 — b) G3 धर्मतः स्थिताः; G5 धर्मसंस्मृ°. — c) G3. 6 M °स्तथा चार्षः.

9 b) Ñ1 °ष्टमो मतः; D5 °ष्टमोधमः. — K1 G6 M7 (hapl.) om. 9c–11b. — c) K (K1 om.) D5 एषां धर्म्यान् (D5 धर्मं). Dn1 G1. 2. 4. 5 धर्मं.

10 K1 G6 M7 om. 10 (cf. v. l. 9). G5 om. 10c–11b. — c) K3 B4 °पूर्वान्; D4 T G3. 4 °र्व्यात्; G1. 2 M3 °र्व्यान्. — d) K3. 4 Da Dn1 T2 G (G5. 6 om.) M6. 8 धर्मान°.

11 K1 G5. 6 M7 om. 11ab (cf. v. l. 9, 10). — a) G1. 2 तु राजसो. — d) K1 corrupt. Ñ1. 2 V1 Dn D1. 4 अधर्म्यौ द्वौ. S मताविह.

12 a) Ñ V1 om. the first च. — b) G3 transp. न and कर्तव्यौ. Ñ1. 2 V1 B Dn D1. 2. 4 कदाचन. — c) K1 G4–6 M3 अन्येन; M5 गांधर्व-. — d) S धर्मश्चैष सनातनः.

13 G5 om. 13. — b) Ñ3 तौ धर्म्यौ (by transp.); G3 धर्मतो. T G1. 2. 6 °शंकथाः; M6–8 °शत्कथाः(!). — cd) M6–8 मिश्राः कर्तव्या.

14 b) Some N MSS. °वर्णिनी. S सकामा भव शोभने. — After 14ab, D2 ins. a passage of 24 lines given in App. I (No. 44). — d) S भार्या मे भव भामिनि.

15 K1 S om. उवाच. — After शकुन्तला, G3 ins.

गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥ १४

शकुन्तलोवाच ।

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ १५
सत्यं मे प्रतिजानीहि यत्त्वां वक्ष्याम्यहं रहः ।
मम जायेत यः पुत्रः स भवेत्त्वदनन्तरम् ॥ १६
युवराजो महाराज सत्यमेतद्ब्रवीहि मे ।
यद्येतदेवं दुःषन्त अस्तु मे संगमस्त्वया ॥ १७

वैशंपायन उवाच ।

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां नयिष्यामि नगरं स्वं शुचिस्मिते ।
यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते ॥ १८
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
जग्राह विधिवत्पाणावुवास च तया सह ॥ १९
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ।

C. 1. 2978
B. 1. 73. 21
K. 1. 94. 35

---

line 3 of 609*. — $^{b}$) K3 Dn1 G4 वात्मा. — $^{c}$) T1 पुरुषश्रेष्ठ. — $^{d}$) Ñ3 °यं नृप.

16 $^{b}$) Some MSS. त्वा (for त्वां). B D (except D5) यथा व°. Ñ3 T1 G1.3.6 M याचाम्यहं. Ñ1 °हं वचः. Ñ3 (*inf. lin. sec. m.*) यस्त्वां वक्ष्याम्यहं वचः; G2.4.5 त्वया रंस्याम्यहं रहः. — After $16^{ab}$, S ins.:

608* ब्राह्मीं मे प्रतिजानीहि प्रतिज्ञां राजसत्तम ।

— $^{c}$) K3 Dn D1.2.4 M3.5 मयि जा°. — $^{d}$) S स राजा. Ñ V1 B (except B4) Dn2. n3 D1.4 T2 G2 M3 °नंतरः.

17 $^{a}$) S °राजश्च कर्तव्यः. — $^{b}$) G1.3 एव (for एतद्). N (except K0.2 D5) M3 ब्रवीमि ते (cf. 18$^{f}$). — $^{c}$) K1 यद्येवमेतद्; T G (except G3) M3 °तदेव. — $^{d}$) K1 ह्यस्तु मे; B4.5 तदा मे. T2 G4.5 संगतं त्वया (T1 *sup. lin.* तव). T1 G1 M त्वयास्तु मम संगमः. — After 17, D4 (marg. *sec. m.*) S ins.:

609* वैशंपायनः ।
तस्यास्तु सर्वं संश्रुत्य यथोक्तं स विशां पतिः ।
दुःषन्तः पुनरेवाह यद्यदिच्छसि तद्वद ।
शकुन्तला ।
ख्यातो लोकप्रवादोऽयं विवाह इति शाश्वतः ।
वैवाहिकीं क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् ।
लोकप्रवादशान्त्यर्थं विवाहं विधिना कुरु । [5]
सन्त्यत्र यज्ञपात्राणि दर्भाः सुमनसोऽक्षताः ।
यथा युक्तो विवाहः स्यात्तथा युक्ता प्रजा भवेत् ।
तस्मादाज्यं हविर्लाजाः सिकता ब्राह्मणास्तव ।
वैवाहिकानि चान्यानि समस्तानीह पार्थिव ।
दुरुक्तमपि राजेन्द्र क्षन्तव्यं धर्मकारणात् । [10]

[ D4 adds उवाच after वैशं° and शकु°. — (L. 5) Some MSS. लोकापवाद°. ]

18 T2 G5.6 om. वैशं° उ°; T1 G1–4 M om. उ°. — $^{b}$) K2.4 Da1 D1 T2 G6 °वाच वि°. — After $18^{ab}$, D4 marg. (irrelevantly) ins. 612*. S subst. for $18^{cdef}$: D4 ins. after $19^{ab}$:

610* पुरोहितं समाहूय वचनं चेदमब्रवीत् ।
राजपुत्र्या यदुक्तं वै न वृथा कर्तुमुत्सहे ।
क्रियाहीनो हि न भवेन्मम पुत्रो महाद्युतिः ।
तथा कुरुष्व शास्त्रोक्तं विवाहं मा चिरं कुरु ।
एवमुक्तो नृपतिना द्विजः परमयन्त्रितः । [5]
शोभनं राजराजेति विधिना कृतवान्द्विजः ।
शासनाद्धिप्रमुख्यस्य कृतकौतुकमङ्गलः ।

— $^{c}$) A few MSS. त्वा (for त्वां). K3 नयिष्येहं; Ñ1.2 V1 B D (except D5) हि नेष्या°; Ñ3 विनेष्या°. — $^{d}$) =(var.) 20$^{f}$. K0 स्वं निवेशं; K4 स्वं निवासं; B5 नगरं त्वां. — $^{e}$) K1 यदि त्व°. K3 यथात्थ मह्यं; D4 यथा त्वमाह. — $^{f}$) Cf. $17^{b}$.

19 S (om. it here) reads $19^{ab}$ as line 3 of 612* (cf. v. l. 20). — $^{a}$) Da transp. एवमुक्त्वा and स. — $^{b}$) Ñ1 °भाषिणीं; G2 °भामिनीं. — After $19^{ab}$, D4 ins. 610*. — $^{c}$) M जग्राह पाणिना. S (except G1.2) पाणिं. — $^{d}$) S (except T2 G1–3) स (for च).

20 $^{a}$) S चैनां प्रातिष्ठत्. — Before $20^{cd}$, S (except T1 M3.5) ins. दुःषन्तः. — After $20^{cd}$, D4 S ins.:

611* त्रैविद्यवृद्धैः सहितां नानाराजजनैः सह ।
शिबिकासहस्रैः सहिता वनमायान्ति बान्धवाः ।
मूकाश्चैव किराताश्च कुब्जा वामनकैः सह ।
सहिता कञ्चुकिवरैर्वाहिनी सूतमागधैः ।
शङ्खदुन्दुभिनिर्घोषैर्वनं च समुपैष्यति ।

— $^{e}$) K0 S तथा (for तया). K1 corrupt. Ñ V1 B D (except Dn3 D5) त्वां नाययि°; T2 G3–6 त्वामाययि°. — $^{f}$)=(var.) $18^{d}$. K Ñ3 D5 स्वं निवासं; S नगरं स्वं (T2 *inf. lin.* त्वां). — S ins. after 20: D4 marg. (irrelevantly), after $18^{ab}$

612* अन्यथा त्वां न नेष्यामि स्वनिवेशमसत्कृताम् ।

C. 1. 2974
B. 1. 73. 21
K. 1. 94. 38

तया त्वामानयिष्यामि निवासं स्वं शुचिस्मिते॥ २०
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः ॥ २१
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥ २२
मुहूर्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥ २३
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा ॥ २४
त्वयाद्य राजान्वयया मामनादृत्य यत्कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥ २५
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥ २६
धर्मात्मा च महात्मा च दुःषन्तः पुरुषोत्तमः ।
अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले ॥ २७
महात्मा जनिता लोके पुत्रस्तव महाबलः ।
य इमां सागरापाङ्गां कृत्स्नां भोक्ष्यति मेदिनीम्॥२८
परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ।
भविष्यत्यप्रतिहतं सततं चक्रवर्तिनः ॥ २९
ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत् ।

---

सर्वमङ्गलसत्कारैरहं सत्यं ब्रवीमि ते ।
वैशंपायनः ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
परिष्वज्य च बाहुभ्यां स्मितपूर्वमुदैक्षत ।
प्रदक्षिणीकृतां देवीं पुनस्तां परिषस्वजे । [5]
शकुन्तला साश्रुमुखी पपात नृपपादयोः ।
तां देवीं पुनरुत्थाप्य मा शुचेति पुनः पुनः ।
शपेयं सुकृतेनैव प्रापयिष्ये नृपात्मजे ।

[ (L. 2) Some MSS. °संस्कारैः and सुभ्रु सत्यं करोमि ते. ]

21 Before 21, K0.2–4 Ñ1.2 B (except B1) D ins. वैशं° उ°; K1 S (except T2 M3.5) वैशं°. — $^{d}$) K D5 प्रति बुद्धिमान्.

22 After $22^{ab}$, D4 S ins.:

613* तं न प्रसाद्यागतोऽहं प्रसीदेति द्विजोत्तमम् ।

— Before $22^{cd}$, S (except T2 G3 M3.5) ins. वैशं°. — $^{c}$) K (except K1) Ñ V1 B (except B6) Da1 D1.2 T2 M3.6.8 स (for सं·). — $^{d}$) D6 स्वकं गृहं.

23 Before 23, M6–8 ins. वैशं° and repeat $22^{cd}$! — $^{a}$) K0.3 च (for तु). Ñ1 B4.5 मुहूर्तमागते तस्मिन्; D4 याते मुहूर्ते त°; S (except M3) ततो मुहूर्ते याते तु. — $^{b}$) G3 °मागतः. — $^{c}$) K0.1.3 अपि (for च). — $^{d}$) G3 M6–8 च (for न). D2 ह (for तम्). — S ins. after 23 (T2 G4–6 after 24) a passage of 21 lines given in App. I (No. 45).

24 Before 24, S ins. वैशं°. — $^{ab}$) K स तां (K0 सुतां). D2 स (for अथ). B4.5 transp. अथ and च. Ñ3 विज्ञाय तां च कण्वोपि. K1 महारथः; K2.3 D5 °यशाः. S चक्षुषा तस्य दिव्येन सर्वं विज्ञाय काश्यपः. — After $24^{ab}$, S ins.:

614* ततो धर्मिष्ठतां मत्वा धर्मे चास्खलितं मनः ।

(cf. $33^{ab}$). — After $24^{c}$, S ins.:

615* सद्वृत्तः स महायशाः ।
एवमेतन्मया ज्ञातं.

— $^{d}$) S दृष्टं दिव्ये°. — After 24, T2 G4–6 ins. a passage of 21 lines given in App. I (No. 45); cf. v. l. 23.

25 T2 om. $25^{ab}$. Before 25, D4 ins. कण्व उ°. — $^{a}$) K1 corrupt. Ñ1.2 V1 B D भद्रे रहसि (D5 राज्ञः कृपया); G3 राज्ञा समयो. — $^{b}$) K2–4 B1.4.5 Da T1 G1.2.4–6 M यत्कृतं; Ñ V1 B1m.3.6 Dn D1.4.5 G3 यः कृतः. — $^{c}$) M5 महायोगो. — After 25, S ins.:

616* न भयं विद्यते भद्रे मा शुचः सुकृतं कृतम् ।

26 $^{a}$) K2 B4 च; S तु (for हि). — $^{d}$) K0 कृतः; K3.4 स्थि° (for स्मृ°). G1.6 M6–8 °न्त्रः श्रेष्ठ उच्यते. — After 26, D4 S ins.:

617* किं पुनर्विधिवत्कृत्वा सुप्रजास्त्वं भविष्यसि ।

27 $^{b}$) = $31^{b}$. K (except K1) Ñ3 B Da D2 पुरुषेश्वरः. — $^{c}$) K0 M अन्वगच्छत्; K1.2 अध्य°; K3 G3 °गच्छत्; K4 अध्या°; T G1.2.4–6 अभ्यागच्छत्. S पतिः (G1 सती). K0 यं तु; K4 Ñ1.2 V1 B3.5 Da1 Dn D1.6 यत्वं (Da1 यस्त्वं); S यस्त्वां (T1 यस्मात्). — $^{d}$) K1 महाभागं; S (except G3 M3.5) भजमानां. M अनिंदिते.

28 $^{a}$) K4 D5 भविता लोके. — $^{b}$) T G महायशाः; M विशांपतिः. — $^{c}$) K1 इमां यः; D1 स इमां. K3 °रोपांतां; Ñ V1 B D (except D6) °रापांगीं. S स च सर्वां समुद्रांतां. — $^{d}$) D5 पालयिष्यति; G6 सम्यग्रक्ष्यति.

29 $^{a}$) D5 परांश्चाभि°; T1 परस्याभि°; G1 बालस्याभि°. K0 चास्तिप्र°; K1 साभ्यप्र°; K2 D1 M8 चापि प्र°. — $^{b}$)

विनिधाय ततो भारं संनिधाय फलानि च ॥ ३०
मया पतिर्वृतो योऽसौ दुःषन्तः पुरुषोत्तमः ।
तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥ ३१
कण्व उवाच ।
प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ।
गृहाण च वरं मत्तस्तत्कृते यदभीप्सितम् ॥ ३२
वैशंपायन उवाच ।
ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा ।
शकुन्तला पौरवाणां दुःषन्तहितकाम्यया ॥ ३३

इति श्रीमहाभारते आदिपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## ६८

वैशंपायन उवाच ।
प्रतिज्ञाय तु दुःषन्ते प्रतियाते शकुन्तला ।
गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥ १
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् ।

C. 1. 2989
B. 1. 74. 2
K. 1. 95. 10

---

G3.4.5 विक्रांतस्य; G3 M दुःषंतस्य. — $^{c}$) K0 अमिप्य°. — $^{d}$) G6 M स्व(M5 स)चक्रं चक्र°.

30 S (om. it here) reads 30 in the course of passage No. 45 given in App. I (cf. v. l. 23). — $^{b}$) B1.6 त्वथ चाग्र°; B4.5 अथ चाग्र°; S पुनरग्र°. — $^{c}$) K D5 निधाय काय(D5 °यि)कं तत्र (K1 विधाय कालिकं ताश्र); S निधाय कामं तत्स्पर्शः. Cd mentions कायकं. — $^{d}$) S कंदानि च फला°.

31 S transp. 31 and 32 (om. कण्व उ°). In S, moreover, 31 recurs (in a slightly altered form) in the course of passage No. 45 given in App. I (cf. v. l. 23). Before 31, K0.2-4 Ñ V1 B D ins. शकुंतलोवाच; K1 S शकुंतला. — $^{a}$) Dn D1.4 वृतो राजा. — $^{b}$)=27$^{b}$. S (first time) दैवयोगादिहागतः. — After (the repetition of) 31$^{ab}$, S ins.:

618* मम चैव पतिर्दिष्टो देवतानां समक्षतः ।

— $^{cd}$) S (first time) तस्य तात प्रसीद त्वं भर्ता मे सुमहायशाः.

32 For S cf. v. l. 31. S om. कण्व उ°; K1 om. उ°. — $^{b}$) B4.5 त्वदर्थे. — After 32$^{ab}$, S ins.:

619* ऋतवो बहवस्ते वै गता व्यर्थाः शुचिस्मिते ।
सार्थकं सांप्रतं ह्येतन्न च पापोऽस्ति तेऽनघे ।

— $^{c}$) G1 त्वं गृहाण वरं. — $^{d}$) K1 D2 S (except G1) त्वत्कृते (K1 °ते); Ñ V1 B Da Dn D1.4.5 त्वं शुभे (B4 त्वं च ते).

33 K1 S om. उ°. — After वैशं°, S ins.:

620* इत्येवमुक्त्वा सहसा प्रणिधाय मनस्विनी ।

With 33$^{ab}$, cf. 614*. — $^{a}$) M तस्य धर्मि°. — $^{b}$) S (except T2) राज्ये चास्खलनं (G6 M5 °लितं). — $^{c}$) G3 M (except M5) पौरवस्य. — $^{d}$) Ñ3 °प्रिय° (for °हित°). G3 M दुःषंतस्य हितैषिणी. — After 33, D4 (marg. *sec. m.*) S ins.:

621* एवमस्त्विति तां प्राह कण्वो धर्मभृतां वरः ।
पस्पर्श चापि पाणिभ्यां सुतां श्रीमिव रूपिणीम् ।
कण्वः ।
अद्य प्रभृति देवि त्वं दुःषन्तस्य महात्मनः ।
पतिव्रतानां यद्वृत्तिस्तां वृत्तिमनुपालय ।
वैशंपायनः ।
इत्येवमुक्त्वा धर्मात्मा तां विशुध्यर्थमस्पृशत् ।
स्पृष्टमात्रे शरीरे तु परं हर्षमवाप सा ।

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* T1 संभव. K Ñ V1 B Da Dn1.n2 D1.2.4.5 T2 G1.3-5 M (om. the sub-parvan name) mention only शाकुंतल (Ñ1.2 V1 B6 शकुंतलोपाख्यान). — *Adhy. name:* K4 T2 G1.4 शकुंतलाविवाहः. — *Adhy. no.* (figures, words or both): K0 68; K1 69; B5 66; Da1 D4 (marg. *sec. m.*) 71; Dn3 72; T1 85; T2 35; G M 36. — *S'loka no.:* Ñ3 Da1 34; Dn1.n3 33; Dn2 32. — *Aggregate s'loka no.:* Dn2 2965.

### 68

☞ This adhy. is missing in D3; the MS. is *wholly* ignored here.

1 In Ś1, 1-19 are missing (cf. v. l. 1. 61. 84). K1 D5 S om. उवाच. — $^{a}$) K0.3 च (for तु). — $^{b}$) Ñ V1 Da1 Dn T G शकुंतलां; D4 (by corr.) M6-8 दिने दिने. — After 1$^{ab}$, M8.5 ins.:

C. 1. 2969
B. 1. 74. 2
K. 1. 93. 10

रूपौदार्यगुणोपेतं दौःषन्तिं जनमेजय ॥ २
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः ।
तस्याथ कारयामास वर्धमानस्य धीमतः ॥ ३
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो युवा ।
चक्राङ्कितकरः श्रीमान्महामूर्धा महाबलः ।
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ॥ ४
षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
व्याघ्रान्सिंहान्वराहांश्च गजांश्च महिषांस्तथा ॥ ५
बद्ध्वा वृक्षेषु बलवानाश्रमस्य समन्ततः ।
आरोहन्दमयंश्चैव क्रीडंश्च परिधावति ॥ ६

---

622* आश्रमे न्यवसत्तत्र काश्यपस्य महात्मनः ।

D4 (marg. *sec. m.*) S ins. after $1^{ab}$ (M3. 5, after 622*):

623* गर्भश्च ववृधे तस्यां राजपुत्र्यां महात्मनः ।
शकुन्तला चिन्तयन्ती राजानं कार्यगौरवात् ।
दिवारात्रमनिद्रैव स्नानभोजनवर्जिता ।
राजप्रेषणिका विप्राश्चतुरङ्गबलान्विताः ।
अद्य श्वो वा परश्वो वा समायान्तीति निश्चिता । [5]
दिनान्पक्षानृतून्मासानयनानि च सर्वशः ।
गण्यमानानि वर्षाणि व्यतीयुस्त्रीणि भारत ।
त्रिषु वर्षेषु पूर्णेषु ऋषेर्वचनगौरवात् ।
ऋषिपत्न्यः सुबहुशो हेतुमद्वाक्यमब्रुवन् ।
शृणु भद्रे लोकवृत्तं श्रुत्वा यद्वोच्यते तव । [10]
तत्कुरुष्व हितं देवि नावमान्यं गुरोर्वचः ।
देवानां दैवतं विष्णुर्विप्राणामग्निरेव च ।
नारीणां दैवतं भर्ता लोकानां ब्राह्मणो गुरुः ।
सूतिकाले प्रसूयेति भगवांस्ते पिताब्रवीत् ।
करिष्यामीति कर्तव्यं तदा ते सुकृतं भवेत् । [15]
पत्नीनां वचनं श्रुत्वा साधु साध्वित्यचिन्तयत् ।

[ (L. 1) M6–8 गर्भः स. D4 M6–8 राज्ञः पत्न्यां. — D4 T2 G3 M6–8 om. line 3. — (L. 4) M (except M3) °प्रेष्यकरा. D4 G3 M (except M3) °बलैः सह. — (L. 6) M6–8 दिनपक्षमासान्सर्तून्सा गणयामास चायनैः. — Before line 10, T1 G1. 2 M ins. ऋषिपत्न्यः. ]

— $^{c}$) K2 गर्भं सुषुवे; Ñ1. 2 V1 B1. 4–6 D2 असूयत च; B3 Da D1 असूत गर्भं. D4 transp. गर्भं and सुषाव. MSS. indiscriminately वामोरूः and °रुः. — $^{d}$) D5 कुमारं चामि°.

2 Ś1 missing. — $^{b}$) B4. 5 कुमारममितद्यु° (cf. $1^{d}$); S प्र(T2 G4 M6–8 प्रा)जायत शकुंतला. — After 2, D4 (marg. *sec. m.*) S ins.:

624* जाते तस्मिन्नन्तरिक्षात्पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ।
गायद्भिर्मधुरं तत्र देवैः शक्रोऽभ्युवाच ह ।
शकुन्तले तव सुतश्चक्रवर्ती भविष्यति ।
बलं तेजश्च रूपं च न समं भुवि केनचित् । [5]
आहर्ता वाजिमेधस्य शतसंख्यस्य पौरवः ।
अनेकैरपि साहस्रै राजसूयादिभिर्मखैः ।
स्वार्थं ब्राह्मणसात्कृत्वा दक्षिणाममितां ददत् ।
देवतानां वचः श्रुत्वा कण्वाश्रमनिवासिनः ।
सभाजयन्तः कण्वस्य सुतां सर्वे महर्षयः । [10]
शकुन्तला च तच्छ्रुत्वा परं हर्षमवाप सा ।
द्विजानाहूय मुनिभिः सत्कृत्य च महायशाः ।

3 Ś1 missing. — $^{b}$) Ñ1 B4 G2. 4. 5 M3 पुण्यवतां. — $^{c}$) Ñ V1 B D विधिवत् (Ñ3 तस्यार्थे); G3 तस्याभि°. — $^{d}$) B5 धर्मतः; S चासकृत्. — After 3, S (except T2) ins.:

625* यथाविधि यथान्यायं क्रियाः सर्वास्त्वकारयत् ।

4 Ś1 missing. — $^{a}$) M5 दंतैः शिखरिभिर्युक्ता. — $^{b}$) K1 भृशं; K2. 3 D5 बृहत्; Ñ2 V1 B Da Dn D1. 2. 4 महान्; T2 G2. 4. 5 [ऽ]भवत्. — After $4^{c}$, T2 G (except G3) ins.:

626* स्वयं विष्णुरिवापरः ।
चतुष्किष्कुर्महातेजाः.

After 4, S ins.:

627* ऋषेर्भयात्तु दुःषन्तः स्मरन्नैवाह्वयत्तदा ।
गते काले तु महति न सस्मार तपोवनम् ।

[ (L. 1) T2 G3 °न्नैवास्मरत्तदा; M °न्नपि न चास्मरत् (M5 °न्नानुस्मरंस्तदा). — (L. 2) G2. 4–6 तपोधनां; M3. 5 जनाधिपः. ]

5 Ś1 missing. — $^{a}$) Ñ3 D5 °लः सन्. K4 षड्वार्षिकोथ बालोसौ; TG °र्षे (T1 G1 °र्षस्) तु ततो बालः; M °र्षः स तदा बालः. — $^{c}$) Ñ V1 Dn D5 सिंहव्याघ्रान्; B Da D1. 2. 4 सिंहान्व्याघ्रान् (by transp.). — $^{d}$) Dn D1 transp. गजान् and महिषान्. S वृकां(G2 °क्षां)श्च. D2 गजाश्च (*sup. lin.* °श्च-) महिषा°; D4 महिषांश्च निवासिनः. — After 5, D4 S ins.:

628* ऋक्षांश्चापि द्विपानन्यान्व्यालानाश्रमपीडकान् ।
बलाद्भुजाभ्यां संगृह्य बलवान्संनियम्य च ।

[ (L. 1) T1 G पक्षां (for अन्यान्). T2 G °श्चान्या-हनव्यालानन्याना°. ]

6 For D4 cf. v. l. 7 also. Ś1 missing. D4 om. $6^{a}$–$7^{b}$. — $^{a}$) Ñ1. 2 V1 B3. 6 Dn D1 बबंध वृक्षे; B1. 4. 5 Da D2

ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
अस्त्वयं सर्वदमनः सर्वं हि दमयत्ययम् ॥ ७
स सर्वदमनो नाम कुमारः समपद्यत ।
विक्रमेणौजसा चैव बलेन च समन्वितः ॥ ८
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ।
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥ ९
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।
शकुन्तलामिमां शीघ्रं सहपुत्रामितोऽश्रमात् ।
भर्त्रे प्रापयताद्यैव सर्वलक्षणपूजिताम् ॥ १०
नारीणां चिरवासो हि बान्धवेषु न रोचते ।
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत माचिरम् ॥ ११
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्तामितौजसः ।
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥ १२
गृहीत्वामरगर्भाभं पुत्रं कमलललोचनम् ।

C. 1. 3001
B. 1. 74. 14
K. 1. 96. 50

---

बध्वा च वृक्षे. S दौःषंतिः (for बल°). — $^{b}$) N (except K1; Ś1 missing; D4 om.) M3.5 समीपतः. — $^{c}$) K0.4 T1 आरोहद्°; B1.4.6 Da D1 M आरुह्द° (M5 °रुंध°). T2 G (except G1) आरुरोह द्रुमांश्चैव. — $^{d}$) K0.2.4 T2 G3-6 स्म; K1 Ñ3 स; D2 तु (for च). — After 6, D4 (suppl. fol. *sec. m.*) S ins.:

629* वनं च लोडयामास सिंहव्याघ्रगणैर्वृतम् ।
ततश्च राक्षसान्सर्वान्पिशाचांश्च रिपून्रणे ।
मुष्टियुद्धेन तान्हत्वा ऋषीनाराधयत्तदा ।
कश्चिद्दितिसुतस्तं तु हन्तुकामो महाबलः ।
वध्यमानांस्तु दैतेयानमर्षी तं समभ्ययात् । [5]
समागतं प्रहस्यैव बाहुभ्यां परिगृह्य च ।
दृढं चाबध्य बाहुभ्यां पीडयामास तं तदा ।
मर्दितो न शशाकास्मान्मोचितुं बलवत्तया ।
प्राक्रोशच्चैरवं तत्र द्वारेभ्यो निःसृतं त्वसृक् ।
तेन शब्देन वित्रस्ता मृगाः सिंहादयो गणाः । [10]
सुस्रुवुश्च शकृन्मूत्रमाश्रमस्थाश्च सुस्रुवुः ।
निरसुं जानुभिः कृत्वा विससर्ज च सोऽपतत् ।
तद्दृष्ट्वा विस्मयं जग्मुः कुमारस्य विचेष्टितम् ।
नित्यकालं वध्यमाना दैतेया राक्षसैः सह ।
कुमारस्य भयादेव नैव जग्मुस्तदाश्रमम् । [15]

[ In D4 certain additional stanzas (excerpted from S) have been written out on four suppl. fol., *sec. m.*, on a different kind of paper, the suppl. sheets being ins., in the MS., after 19$^{ab}$. — (L. 12) D4 परासुर्दनुजो भूमौ पपात परिपीडितः. ]

7 Ś1 missing. D4 om. 7$^{ab}$ (cf. v. l. 6). — S ins. after 7$^{ab}$: D4 (marg. *sec. m.*), after 5:

630* कण्वेन सहिता दृष्ट्वा कर्म सर्वेऽतिमानुषम् ।

— $^{c}$) Ñ1.3 B5 यस्त्व°. — $^{d}$) K0 सर्वांश्च; K4 सर्वान्हि. Ñ1.2 V1 Dn D5 S °त्यसौ.

8 Ś1 missing. — $^{b}$) M5 समवर्धत. — $^{d}$) T1 जयेन. — After 8, D4 (suppl. fol. *sec. m.*) S ins.:

631* अप्रेषयति दुःषन्ते महिष्यास्तनयस्य च ।
पाण्डुभावपरीताङ्गीं चिन्तया समभिप्लुताम् ।
लम्बालकां कृशां दीनां तथा मलिनवाससम् ।
शकुन्तलां च संप्रेक्ष्य प्रदध्यौ स मुनिस्तदा ।
शास्त्राणि सर्ववेदाश्च द्वादशाब्दस्य चाभवन् ।

[ Before line 1, D4 T2 G3.6 M3 ins. वैशं°. ]

9 Ś1 missing. — $^{b}$) K2 चाप्यति°; K3 चाप्यत्यमा°. — $^{c}$) B4 (m as in text).5 समर्थौ. M °राज्यस्य. — $^{d}$) S इत्यनुध्याय स द्विजः. — After 9, D4 (suppl. fol. *sec. m.*) S (G2 om. from line 32 onward) ins. a passage of 61 lines given in App. I (No. 46).

10 Ś1 missing. G2 om. 10–13. — $^{ab}$) Ñ1.2 V1 B5 मतम् (for बलम्). S (G2 om.) इत्युक्त्वा सर्वदमनं कण्वः शिष्यानथाब्रवीत्. — $^{c}$) Ñ1.2 V1 B Da D2 आशु (for शीघ्रं). — $^{d}$) K1 T1 G1 °मिहाश्र°. Ñ2 V1 B Da Dn D1 °तो गृहात्; D5 °तो वनात्. T G3-6 M सपुत्रामाश्रमादितः. — $^{e}$) Ñ3 Dn S (G2 om.) भर्तुः प्रा(M6-8 प्र)पयतागारं (T2 G1.3-6 °भ्याशं). — $^{f}$) Cf. 1. 15. 3$^{d}$ and v. l. K नास्या वासोऽश्रमे क्षमः (K1 मा स्म वास इह क्षमाः); Ñ3 D5 °संयुतां; Dn M (except M3) °पूजितं.

11 Ś1 missing. G2 om. 11 (cf. v. l. 10). — $^{a}$) K0.3.4 मे; M6-8 वै (for हि). — $^{b}$) K1 शोभते; K2 युज्य°; D5 शस्य°. — $^{c}$) B4 G1 °चारित्र्य°; M °धर्मघ्नं. — $^{d}$) Ñ3 तस्माद्गच्छत. — After 11, D4 (suppl. fol. *sec. m.*) S (except G2) ins. a passage of 28 lines given in App. I (No. 47).

12 Ś1 missing. G2 om. 12 (cf. v. l. 10). — $^{a}$) K4 D1 T2 G3-6 च ते; D5 ततः; T1 G1 M शिष्याः (for सर्वे). — $^{b}$) K1 Ñ1 Dn D1.4 T2 G3-6 °ष्ठंत महौजसः; B3 D2 T1 G1 M °ष्ठन्नमि°. — $^{d}$) Ñ3 सहपुत्रां गजाह्वयं; S (G2 om.) दुःषंतस्य पुरं प्रति.

13 Ś1 missing. G2 om. 13 (cf. v. l. 10). — $^{a}$) Ñ3

C. 1. 3001
B. 1. 74. 14
K. 1. 90. 50

आजगाम ततः शुभ्रा दुःषन्तविदिताद्वनात् ॥ १३
अभिसृत्य च राजानं विदिता सा प्रवेशिता ।
सह तेनैव पुत्रेण तरुणादित्यवर्चसा ॥ १४
पूजयित्वा यथान्यायमब्रवीत्तं शकुन्तला ।
अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ॥ १५
त्वया ह्ययं सुतो राजन्मय्युत्पन्नः सुरोपमः ।
यथासमयमेतस्मिन्वर्तस्व पुरुषोत्तम ॥ १६
यथा समागमे पूर्वं कृतः स समयस्त्वया ।
तं स्मरस्व महाभाग कण्वाश्रमपदं प्रति ॥ १७
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि ॥ १८
धर्मकामार्थसंबन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ १९
सैवमुक्ता वरारोहा व्रीडितेव मनस्विनी ।
विसंज्ञेव च दुःखेन तस्थौ स्थाणुरिवाचला ॥ २०
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा ।

---

°गर्भं तं. S (G$_2$ om.) °त्वा चामरप्रख्यं. — $^{c}$) Ñ$_3$ तदा; B$_6$ वनात्. K (except K$_1$) Ñ V$_1$ Dn D$_{1.4.5}$ सुभ्रूः; B$_{1.4}$ Da शुद्धा; D$_2$ साध्वी. S (G$_2$ om.) आजगमुश्च पुरं रम्यं. — $^{d}$) Ñ V$_1$ Dn D$_{1.5}$ दुःषंतं. K$_1$ °निहिताद्. S (G$_2$ om.) दुःषंताध्युषितं व°. — After 13, D$_4$ (suppl. fol. *sec. m.*) S (G$_2$ om. lines 1–14) ins. a passage of 99 lines given in App. I (No. 48); there being an additional colophon after line 64.

14 Ś$_1$ missing. — $^{a}$) K D$_5$ उपसृ°. K G$_1$ तु (for च). — $^{b}$) K$_1$ विवृता; S वेदिता. Ñ$_{1.2}$ V$_1$ B D (except D$_5$) च प्रवे°; G$_2$ प्रतिवे°. — $^{c}$) S तेन कुमारेण. — $^{d}$) Ñ$_{1.2}$ V$_1$ B D (except D$_5$) बालार्कसमतेजसा. — After 14, K$_4$ Dn D$_{1.2.4}$ ins.:

632* निवेदयित्वा ते सर्वे आश्रमं पुनरागताः ।

D$_4$ (suppl. fol. *sec. m.*) cont.: S ins. after 14:

633* सिंहासनस्थं राजानं महेन्द्रसदृशद्युतिम् ।
शकुन्तला नतशिराः परं हर्षमवाप्य च ।

15 Ś$_1$ missing. — $^{b}$) K$_1$ सा; Ñ$_{1.2}$ V$_1$ B D (except D$_5$) च (for तं). — After 15$^{ab}$, D$_4$ (suppl. fol. *sec. m.*) S ins.:

634* अभिवादय राजानं पितरं ते दृढव्रतम् ।
एवमुक्त्वा सुतं तत्र लज्जानतमुखी स्थिता ।
स्तम्भमालिङ्ग्य राजानं प्रसीदस्वेत्युवाच सा ।
शाकुन्तलोऽपि राजानमभिवाद्य कृताञ्जलिः ।
हर्षेणोत्फुल्लनयनो राजानं चान्ववैक्षत । [5]
दुःषन्तो धर्मबुद्ध्या तु चिन्तयन्नेव सोऽब्रवीत् ।
किमागमनकार्यं ते ब्रूहि त्वं वरवर्णिनि ।
करिष्यामि न संदेहः सपुत्राया विशेषतः ।
शकुन्तला ।
प्रसीदस्व महाराज वक्ष्यामि पुरुषोत्तम ।

— S transp. 15$^{cd}$ and 16$^{ab}$. — $^{c}$) S तस्मात्पुत्र°.

16 Ś$_1$ missing. Ñ$_1$ om. 16$^{ab}$. For S cf. v. l. 15. — $^{a}$) K$_2$ तव; K$_4$ त्वत्तो (for त्वया). K$_3$ ह्येष. B$_{4.5}$ त्वदीयोयं. S एष (G$_1$ अयं) पुत्रो हि ते राजन्. — $^{b}$) K$_0$ °पम; K$_1$ B$_{4.5}$ °त्तमः; Ñ$_3$ D$_5$ S परंतप (or °पः). — $^{c}$) D$_2$ यथा स समये त°; T G यथोक्तमाश्रमे (T$_1$ G$_1$ यथावत्समये) त°; M °था त्वं (M$_{3.5}$ च) समये त°. — $^{d}$) Ñ$_{1.2}$ V$_1$ B$_{1.3.6}$ Da D$_2$ °श्वेश्वर; T$_1$ G$_1$ M$_5$ °पर्षभ.

17 Ś$_1$ missing. — $^{a}$) T$_2$ G (except G$_1$) मया (for यथा). Dn D$_{1.4}$ मत्संगमे; G$_1$ समागते. — $^{b}$) Ñ$_{1.2}$ V$_1$ Dn D$_{1.4}$ यः कृतः स°. Ñ$_{1.2}$ B$_5$ Dn तथा (for त्वया). — $^{c}$) K$_3$ B$_3$ D$_5$ तत्स्म°; T$_2$ G (except G$_1$) तत्त्वं स्मर. K (except K$_3$) D$_5$ महाराज; B$_{3.6}$ T$_2$ G$_{3-6}$ °बाहो. — After 17, D$_4$ (suppl. fol. *sec. m.*) S ins.:

635* वैशंपायनः ।
तस्योपभोगसक्तस्य स्त्रीषु चान्यासु भारत ।
शकुन्तला सपुत्रा च मनस्यन्तरधीयत ।

G$_{1.2.4.5}$ cont.:

636* स धारयन्मनस्येनां सपुत्रां सस्मितां तदा ।
तदोपगृह्य मनसा चिरं सुखमवाप सः ।

18 Ś$_1$ missing. — $^{a}$) K$_{0.2.3}$ D$_1$ सोप्यश्रु°. T$_1$ M$_{3.5}$ तु; T$_2$ G$_{3-6}$ अपि; G$_{1.2}$ च; M$_{6-8}$ अथ (for एव). — $^{b}$) T श्रुत्वा (for तस्या). D$_1$ T$_1$ G$_{1.2}$ राजन्. M$_{6-8}$ न सस्मार स्म°. — $^{d}$) S त्वया भद्रे समागमं. — After 18, D$_4$ (suppl. fol. *sec. m.*) S ins.:

637* मैथुनं च वृथा नाहं गच्छेयमिति मे मतिः ।
नाभिजानामि कल्याणि त्वया सह समागमम् ।

19 Ś$_1$ missing. For D$_4$, cf. v. l. 6. — $^{a}$) K$_1$ S धर्मार्थकामसं°. — $^{c}$) T$_1$ शीघ्रं (for कामं).

20 Ś$_1$ resumes. Before 20, S ins. वैशं°. — $^{a}$) Ś$_1$ K$_1$ एवमुक्त्वा; K$_{2-4}$ Ñ V$_1$ Da Dn G$_{1.2}$ M$_{6.7}$ °मुक्त्वा; T$_2$ एवमु°. T$_2$ तदा तेन (for वरा°). — $^{b}$) Ś$_1$ K$_{1.3}$ Dn D$_{1.4}$ तपस्वि°. — $^{c}$) Ñ V$_1$ B D G$_1$ निः(D$_5$ अ)सं°. — $^{d}$) Ñ V$_1$ B D स्थूणेव निश्चला; S विगतचेतना.

कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥ २१
आकारं गूहमाना च मन्युनाभिसमीरिता ।
तपसा संभृतं तेजो धारयामास वै तदा ॥ २२
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥ २३
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःसङ्गं यथान्यः प्राकृतस्तथा ॥ २४
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याण* बत साक्षी त्वं मात्मानमवमन्यथाः ॥ २५
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ २६
एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
यस्यान्तिके त्वं वृजिनं करोषि ॥ २७
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च स्वश्चैवान्तरपूरुषः ॥ २८
आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ २९
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ ३०
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः ।

C. 1. 3019
B. 1. 74. 32
K. 1. 98. 13

---

21 $^{b}$) Ñ V1 B D °माणौष्ठ°. — $^{c}$) S निर्दहंती(G2.3 °हन्नि)व नेत्राभ्यां.

22 $^{a}$) K1 सा (for च). G3 आकारेण समा°. — $^{b}$) Ś1 K1 अपि; Ñ V1 B D T2 G2.4.5 च (D5 अति) (for अभि-). B (except B1) D2 T2 G2.4.5 समीरितं.

23 $^{c}$) Ś1 K1.2 D5 °रं समभिप्रेक्ष्य. — $^{d}$) K3.4 Ñ V1 B3.4.6 Da D2 राजानम°. S यथान्यायं वचोब्र°.

24 Before 24, D4 (marg.) G1 M ins. शकुं°. — $^{a}$) Ñ3 जानन्नाम. — $^{b}$) Ñ3 किं नु देव. — $^{c}$) K1.4 Ñ V1 B1m.5 D (except Da2 D5) M6-8 निःशंकं (M6-8 °शंकः); K3 T2 G नः (K3 नौ) संगं. — $^{d}$) G3 यथा त्वं. Ñ1.2 V1 B D (except D5) °कृतो जनः.

25 $^{a}$) S यस्य ते. — $^{b}$) Ñ1.2 V1 B वा; Cd च (as in text). — $^{cd}$) Ś1 K D1 °णं भव (K0.2-4 तव; D1 वद्) साक्षी त्व(K0.2-4 साक्षीद्)मात्मानं माव°; Ñ V1 B Dn D2.4 °णं वद साक्ष्येण मा°; B3m Da °णं बत साक्षी चेन्मा°; D5 °णं वद साक्षित्वमात्मानं माव°; T G °णं बत साक्षीणा(T1 °त)मात्मानमवमन्यसे; M °णं साक्षिणं चैव मा(M3.5 कस्मादा)त्मानमवमन्यसे. ❀ Dev.: सत्यस्य चानृतस्य च मध्ये यत् कल्याणं तत्तु त्वमेव वेद [।] बत विस्मये । साक्षी पक्षपाती [।] चेतनं (? read आत्मानं) मावमन्यथाः [।] ❀ — Cf. Manu 8. 84.

26 T2 om. 26–27. — $^{a}$) M6-8 अन्यथा. — $^{b}$)= 32$^{b}$. T1 °था सत्सु भाषते. — $^{c}$) D5 किं त्वया. — $^{d}$) N (except D4) चौरेण. Ñ2 आत्मापघातिनः; D5 °त्मापहा°. — Cf. Manu 4. 255.

27 T2 om. 27 (cf. v. l. 26). — $^{b}$) Ś1 कविं (for मुनिं). — $^{c}$) G6 °ता कारणं. K0.2 पातकस्य. — $^{d}$) K2.4 Ñ V1 D (except D2) S (T2 om.) तस्यांतिके (G3 °तरे). — S ins. after 27 (T2, which om. 26–27, ins. after 25):

638* धर्म एव हि साधूनां सर्वेषां हितकारणम् ।
नित्यं मिथ्याविहीनानां न च दुःखावहो भवेत् ।

With 27 cf. Manu 8. 91.

28 $^{a}$) K (except K1) पातकं. — $^{b}$) K3 B3.5.6 D3 G3.6 M transp. न and कश्चिद्वेत्ति. — $^{c}$) Ś1 देवाश्चैवं च; K1 चैव तं देवाः. S देवाश्चैनं विदंत्येव (T1 G1 प्रपश्यंति; M6-8 विदंत्यन्ये). — $^{d}$) K0.4 तथैवा°; K3 स चैवा°; Ñ V1 D (except Da) T1 G1 यश्चैवा°. T2 G2-6 M भूतानि च (T2 °तांश्चैव; G3 M6-8 °ताश्चापि; M3.5 °यांसोपि) तथापरे. — Cf. Manu 8. 85.

29 $^{a}$) K0.1 M6 °वनलानिलौ च; K2.3 B5 D6 T2 G °वनिलोनलश्च. — $^{b}$) D3 मनश्च; G6 दिशश्च. — $^{d}$) K0.2.3 B4.5 धर्मो हि. B3 marg. वृत्तिं. — Cf. Manu 8. 86.

30 $^{a}$) G3 °स्वतो राजा. — $^{b}$)=31$^{d}$. Ś1 K D5 (? Cd) न (K0 वि-) यात°; Ñ1 निर्घात°. ❀ Dev.: न यावयति (sic) । न फलवत्करोति । ❀ — G5 (hapl.) om. 30$^{c}$–31$^{a}$. — Cf. Manu 8. 92$^{ab}$.

31 G5 om. 31 (cf. v. l. 30). — $^{a}$) K0.3 M6-8 न च तु°; T G1-3.6 M3 न तुष्यति च. Ś1 K2 B4 D2.5 G3 यस्यैव. — $^{b}$) M6 दुष्कृतस्य दु°. — $^{c}$) G6 °पकं नूनं. — $^{d}$)=30$^{b}$. Ś1 K0.1 Ñ3 B1m.5 वियात°; K2 धिया न°;

C. 1. 3019
B. 1. 74. 32
K. 1. 98. 18

तं यमः पापकर्माणं निर्यातयति दुष्कृतम् ॥ ३१
अवमन्यात्मनात्मानमन्यथा प्रतिपद्यते ।
देवा न तस्य श्रेयांसो यस्यात्मापि न कारणम् ॥ ३२
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम् ।
अर्घ्यार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥३३
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥ ३४
यदि मे याचमानाया वचनं न करिष्यसि ।
दुःषन्त शतधा मूर्धा ततस्तेऽद्य फलिष्यति ॥ ३५
भार्यां पतिः संप्रविश्य स यस्माज्जायते पुनः ।
जायाया इति जायात्वं पुराणाः कवयो विदुः ॥ ३६
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ॥ ३७
पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ ३८
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥ ३९
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य भार्या मित्रं मरिष्यतः ॥ ४०
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः ॥४१
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥ ४२
कान्तारेष्वपि विश्रामो नरस्याध्वनिकस्य वै ।

---

K4 (? Cd) विघात°; G4 तिर्यङ्क°. ❀Dev.: विशेषेण घातयति । यातना करोति ।❀

32 a) K3 °मन्य महात्मानं; Ñ1.2 V1 B D M3 योवम°; Ñ3 °मन्यान्यथात्मा°; T G (except G2) M5–8 °मत्यात्म°. — b) = 26b. G3 °था यः करिष्यति. — c) Ñ1.2 V1 B Da Dn D2.4 न तस्य देवा श्रे°; D1 नास्य देवा न श्रे°. — d) T1 °त्मा न हि का°; G6 सोऽस्य नात्मापि का°.

33 a) S °ति मैवं (M3.6–8 चैवं) मां (T मा). — b) G M3.5 अवमं°. — c) K0.2 Ñ V1 B D G6 अर्घ्यार्हां; G3 पूजा°.

34 a) K2 °र्थं त्वं. — b) K4 D2 G3 उपेक्षसि च (K4 ह); D4 त्वमुपेक्ष्यसि. Cd mentions उपेक्षसि. — c) Ś1 T1 G1.6 M शून्यं; T2 G2.4.5 राजन्. K1 न खल्विदमहा (read °हं) रौमि. — d) K1 शून्ये किं. S करोमि न (M6–8 न करोमि) शृ°.

35 c) Ś1 K1 शतशो. S °धा त्वद्य. — In Ś1, the portion from 35d–46 is lost on the missing upper half of a fol. (53). — d) Ñ1 हनिष्यति; Ñ2 V1 Dn D1.4 स्फुटि°; D5 पति°. S मूर्धा ते विफलि(G3 तेपि भवि)ष्यति.

36 Ś1 missing (cf. v. l. 35). — a) T2 G (except G3.6) जायां. T1 पतिः स्वां प्र°. — b) S स तस्यां जा°. — c) Ñ1.2 V1 B D (except D2.5) तद्धि (for इति). — d) Ñ1.2 V1 B D (except D5) पौरा°. S यद्स्यां (T1 यद्य°; G2.5 यत्व°; G6 यस्त°; M6–8 यत्त°) जायते पुनः (T1 G1.3 M6.7 सुतः; G6 ततः). — Cf. Manu 9. 8.

37 Ś1 missing (cf. v. l. 35). — a) K0.2.4 Da1 D5 G6 सदा°. — b) K (except K4) Da1 D5 G6 य(K1 स)दप°. — c) B4 उत्ता°; S (except G3.6 M3.5) संता° (T1 यत्ता°).

38 =(var.) Manu 9. 138. — Ś1 missing (cf. v. l. 35). — d) K2.3 Ñ3 S पूर्वमेव स्वयंभुवा (M5 पूर्वैरपि महर्षिभिः). — After 38, K4 S Nīlp ins.:

639* पुत्रेण लोकाञ्जयति पुत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पुत्रेण मोदन्ते प्रपितामहाः ।

[ Nīlp पौत्रेण (for पुत्रेण both times), जयते, and पौत्रस्य (for पुत्रस्य). ]

39 Ś1 missing (cf. v. l. 35). — b) T2 G2.4.5 प्रजायते. — d) T G3 या पतिप्रिया; G1.6 M यातिथिप्रिया.

40 Ś1 missing (cf. v. l. 35). — a) K1 शरीरस्य. — After 40a, K3 ins.:

640* शरीरं प्रोच्यते बुधैः ।
भार्या श्रेष्ठतमा लोके.

— b) T2 G2.4.5 °तमा. — d) K2 Ñ V1 B D (except D5) मूलं (for मित्रं). K1 मुमूर्षतः; Ñ1.2 V1 B D2 तु संततेः; Ñ3 Da Dn D1.4 तरि°. S यः सभार्यः (T1 G2 यस्य भार्या) स बंधुमान् (G3 च्चोत्तमः) (G1 partly broken & corrupt).

41 Ś1 missing (cf. v. l. 35). — a) G3 पतिभक्तिमती या तु. — b) K1 सततं; G3 सा भार्या. — d) B4 सुखा(m क्रिया)न्वि°; S (except G1 M6) श्रियावृताः.

42 Ś1 missing (cf. v. l. 35). — a) K0.4 G1.6

यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥ ४३
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ॥ ४४
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतं च भर्तारं पश्चात्साध्व्यनुगच्छति ॥ ४५
एतस्मात्कारणाद्राजन्पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥ ४६
आत्मात्मनैव जनितः पुत्र इत्युच्यते बुधैः ।
तस्माद्भार्यां नरः पश्येन्मातृवत्पुत्रमातरम् ॥ ४७
भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ ४८
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥ ४९
सुसंरब्धोऽपि रामाणां न ब्रूयादप्रियं बुधः ।
रतिं प्रीतिं च धर्मं च तास्वायत्तमवेक्ष्य च ॥ ५०
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् । C. 1. 3030 B. 1. 74. 52 K. 1. 98. 42

---

M6–8 सहायाः; Ñ1 °ह्यायः; T1 G3 M3 °भार्याः; M5 साहाय्याः.

43 Ś1 missing (cf. v. l. 35). — a) K2 G3.6 M6–8 °स्वथ. K0.4 विश्वासो. — b) Ñ V1 B D T1 G1.3.6 M जनस्या°. — c) G3 यस्य दाराः; M5 यः सभार्यः. K2 D2 यस्माद्दारेषु विश्वासः. — d) G6 सदा गतिः.

44 Ś1 missing (cf. v. l. 35). — a) B4.5 संस्मरं°; D2 संसेवं°. K1.4 D2 T G2.4.5 M6–8 °मिप्रेतं. — b) K0.2.4 °ष्वेकपातितं; D5 G1 °ष्वेव पातिनं; G2.5 °ष्वेव पातितं. — c) K4 G3 भार्या चान्वेति; D2 °वाभ्येति. — K3 (hapl.) om. 44d–45c. — d) G3.6 वै (for या).

45 Ś1 missing (cf. v. l. 35). K3 om. 45abc (cf. v. l. 44). — Ñ1.2 V1 (hapl.) om. 45b–46c. — c) S पूर्वप्रेतं तु. — d) T1 साभ्यनु°; T2 G1.6 M6–8 सा ह्यनु° G2.4.5 M3.5 साप्यनु°; G3 सा ह्युप°.

46 Ś1 missing (cf. v. l. 35). Ñ1.2 V1 om. 46abc (cf. v. l. 45). — d) S अस्मिन् (for इह). — After 46, S ins.:

641* पोषणार्थं शरीरस्य पाथेयं स्वर्गतस्य वै ।

47 Ś1 resumes. — a) D5 आत्मनात्मैव; T G2.4–6 M6.7 आत्मात्मना च; G1 M3.8 आत्मनात्मा च; G3 आत्मना चात्मा. — b) B4.5 सुत इ°. K3 इत्यभिधीयते. — M6–8 om. 47cd. — c) T G M3.5 °र्यां पतिः. — S ins. after 47 (M6–8, after 47ab):

642* अन्तरात्मैव सर्वस्य पुत्रो नामोच्यते सदा ।
गती रूपं च चेष्टा च आवर्ता लक्षणानि च ।
पितॄणां यानि दृश्यन्ते पुत्राणां सन्ति तानि च ।
तेषां शीलगुणाचाराः संपर्काच्च शुभाशुभात् ।

(cf. 669*).

48 a) G6 भार्यानुनीतं तं पुत्रं. — b) Ñ V1 B D (except D5) °र्शेष्विव चान°. — c) T2 G6 M transp. ह्लाद° and जनि°. D2 मनुजः (for जनि°). Ñ1 जायते जनितं प्रे°; T2 G1–5 जनिता मोदते प्रे°. — After 48, S (G6 om. lines 6–7) ins.:

643* पतिव्रतारूपधराः परबीजस्य संग्रहात् ।
कुलं विनाश्य भर्तॄणां नरकं यान्ति दारुणम् ।
परेण जनिताः पुत्राः स्वभार्यायां यथेष्टतः ।
मम पुत्रा इति मतास्ते पुत्रा अपि शत्रवः ।
द्विषन्ति प्रतिकुर्वन्ति न ते वचनकारिणः । [5]
द्वेष्टि तांश्च पिता चापि स्वबीजे न तथा नृप ।
न द्वेष्टि पितरं पुत्रो जनितारमथापि वा ।
न द्वेष्टि जनिता पुत्रं तस्मादात्मा सुतो भवेत् ।

49 a) G2.4.5 °माना जना. — b) S °भिस्तुमुलैर्. Ñ1 D2 S जनाः (T1 G4 जनैः; M6–8 अपि). — c) Ñ1 T2 मोदंते. T1 G1.3.6 M ते स्व(G3 तेन्य)दारेषु तुष्यंति. — d) For M6–8 see below. — After 49, S ins.:

644* विप्रवासकृशा दीना नरा मलिनवाससः ।
तेऽपि स्वदारांस्तुष्यन्ति दरिद्रा धनलाभवत् ।

[ M6–8 (hapl.) om. 49cd as also line 1 and the first half of line 2 of 644*. — (L. 2) For first half of v. l. 49c. ]

50 a) K0.4 पुमान्क्रुद्धोपि; T1 G3.6 M अप्रियोक्तोपि (M5.6 हि); T2 G1.2.4.5 सुसंक्रुद्धो°. K2 T2 G2.4.5 दाराणां; Ñ3 स्त्रां रामां; T1 G1.3.6 M नारी°. — b) Ñ V1 B D न कुर्या°. K1 T1 G1.3.6 M वचः; Ñ V1 B D (except D5) नरः (for बुधः). — c) G2.4.5 M7.8 रतिः प्रीतिश्च (M7.8 °तिः स्व-) धर्म(M7.8 °र्मा)श्च. M5 धर्मांश्च; M6 धर्माश्च. — d) T2 G1.2.4.5 तदायत्तम्; M3.5 तास्वायत्तान्. K1.3.4 D5 ह; Ñ V1 B (except B5) Da Dn D1.2.4 हि; M6–8 तु (for च). — After 50, S ins.:

645* आत्मनोऽर्धमिति श्रौतं सा रक्षति धनं प्रजा ।
शरीरं लोकयात्रां वै धर्मं स्वर्गमृषीन्पितॄन् ।

51 a) T G3–6 M पुण्याः. T1 दाराः; G3 लोकाः (for रामाः). G1.2 पुण्यदाराः. S (except T1) °तनाः. — d) Ś1 K1 रामा ऋते; D1 °रते; G3 कामाहते. M6–8

C. 1. 3030
B. 1. 74. 52
K. 1. 98. 43

ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥ ५१
परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः ।
पितुराश्लिष्यतेऽङ्गानि किमिवास्त्यधिकं ततः ॥ ५२
स त्वं स्वयमनुप्राप्तं साभिलाषमिमं सुतम् ।
प्रेक्षमाणं च काक्षेण किमर्थमवमन्यसे ॥ ५३
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः ।
न भरेथाः कथं नु त्वं धर्मज्ञः सन्स्वमात्मजम् ॥ ५४
न वाससां न रामाणां नापां स्पर्शस्तथा सुखः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥ ५५
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ ५६
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ।
पुत्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते ॥ ५७
त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिंदम ।
इमं कुमारं राजेन्द्र तव शोकप्रणाशनम् ॥ ५८
आहर्ता वाजिमेधस्य शतसंख्यस्य पौरव ।
इति वागन्तरिक्षे मां सूतकेऽभ्यवदत्पुरा ॥ ५९
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ।
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ॥ ६०
वेदेष्वपि वदन्तीमं मन्त्रवादं द्विजातयः ।

---

स्रष्टुकामादृते. Ñ V1 Dn D5 प्रजां. — After 51, Da1 ins. a passage of 15 lines given in App. I (No. 49); while S ins.:

646* देवानामपि का शक्तिः कर्तुं संभवमात्मनः ।
पण्डितस्यापि लोकेषु स्त्रीषु सृष्टिः प्रतिष्ठिता ।
ऋषिभ्यो ऋषयः केचिच्चण्डालीष्वपि जज्ञिरे ।

After the above, G1 ins. the last line of 659*.

52 $^a$) K0 परिवर्त्य; Ñ V1 Da Dn D1.4 प्रतिपद्य; D5 प्रणि°; S °सृत्य. G3 यदा रेणुर्. — $^b$) K0.4 °पांशुगुं°; S °रेणुकुं° (G3 °त्वचकुं°). — $^c$) S पितुरालिंगने (G3 पितृभ्यो लिह्यते). — $^d$) K2 किमिहा°. Ñ1.2 V1 B D (except D5) किमस्त्यभ्य°; T G °वाभ्य° (T1 G2 °वाप्य°; G3 °हाभ्य°). M किं ततोस्त्यधिकं सुखं.

53 $^a$) S त्वं सूनुम्. Ñ V1 B D (except D5) °मभि(D2 °पि)प्रा°. — $^b$) K1 °षं सुतं स्विमं; S °षं मनस्विनं. — $^c$) A few MSS. प्रेक्ष्य°. K3 च कार्त्स्न्येन; K4 Ñ V1 B D T2 G1.2.4.5 कटाक्षेण; T1 कांक्षमाणं; G3 M च कांक्षेण; G6 च कांक्ष्येनं.

54 $^a$) Ś1 K1 अंडजा; G3 अंगानि. Ś1 K1 B1m.4.5 बिभ्रतः. — $^b$) Ś1 K1 विध्यंते; S त्यजंति. — After $54^{ab}$, T1 G1.3.6 M ins. (for the first time) line 2 of 648*. — M5 om. $54^{cd}$. — $^c$) Ś1 K1 नाम; K3 त्वं तं; T1 G1 राजन् (for नु त्वं). — $^d$) K1 धर्मिष्ठः. D4 °ज्ञ त्वं स्व°; T G4.5 मजातं स्वय(T1 स्वं त)मा°; G1.2 मम जातं स्व°; G3 अज्ञातः स्वयमा°; G6 अज्ञातं स्वं स्व°; M3 अजामिव चात्म°; M6–8 अज्ञानात्स्वमिवात्म°. — After 54, S ins.:

647* ममाण्डानीति वर्धन्ते कोकिलाण्डानि वायसाः ।
किं पुनस्त्वं न मन्येथाः सर्वज्ञः पुत्रमीदृशम् ।
मलयाच्चन्दनं जातमतिशीतं वदन्ति वै ।
शिशोरालिङ्गनं तस्माच्चन्दनादधिकं भवेत् ।

55 $^a$) T2 G2.5 रत्नानां (for रामा°). — $^b$) T2 G2.4.5 अंगस्प°. Ñ2.3 V1 B D T G M3 तथाविधः (G6 तथापि च). — $^c$) M6–8 शिशूनालिं° (sic). — $^d$) G1 स्पर्शे सूनौ; M5 पितुः स्पर्शो. Some MSS. -सुखं.

56 In S the sequence of 56–57 is: $57^{cd}$, $57^{ab}$, 56. — $^b$)=1. 1. $202^b$. B Da °ष्ठश्वतु°.

57 For S cf. v. l. 56. — $^a$) G2 स्पर्शं कृत्वा. S समालिंग्य. — After $57^{ab}$, Da1 ins. a passage of 6 lines given in App. I (No. 50). — K2 om. $57^c$–$58^a$. — $^c$) K3 °र्शात्तु परमः; K4 T G1.4.5 M3.5 °र्शात्प्रियतर. — $^d$) Ñ3 °र्शो भुवि.

58 K2 om. 58 (cf. v. l. 57). — $^b$) K0.1.4 Da1 D2 प्रसूताह°; K3 (by corr.) S प्रजातोय°. S (except G3) °दमः. — After $58^{ab}$, S (except G6) ins.:

648* अद्यायं मन्नियोगात्तु तवाह्वानं प्रतीक्षते ।
[ M अहं मन्ये मन्नियोगात्तवाह्वानं प्रतिष्ठते. ]

— $^c$) K0 इमं पुत्रं तु. S कुमारो राजशार्दूल. — Ś1 Ñ1.2 V1 B D (except D5) °विनाशनं; S °शनः.

59 $^b$) S पौरवः (G5 भूपते). — After $59^{ab}$, S ins.:

649* राजसूयादिकानन्यान्क्रतूनमितदक्षिणान् ।

— $^c$) S इति गौरंत°. — $^d$) M सूत(M3.5 °ति)कालेवदत्.

60 $^a$) T G1.3.6 ततो; G2.5 हंत; G4 अतो; M तथा (for ननु). B4.6 S स्वमंकमा°. Ñ3 बाहुना स्वांकमा°. — After $60^a$, G3 ins.:

650* मूर्ध्न्युपाघ्राय पुत्रकम् ।
एवं हि पुत्रेणान्येऽपि.

— $^b$) Ś1 K1 ग्रामाद्ग्रा°. — $^c$) Ś1 K D5 पुत्रमुपा°.

61 $^a$) A few MSS. देवेष्व°. K1 वदंत्येवं. — $^b$) K1

C. 1. 3301
B. 1. 78. 23
K. 1. 72. 23

उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ।
आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ ॥ २३

देवयान्युवाच ।

त्वरितं घूर्णिके गच्छ सर्वमाचक्ष्व मे पितुः ।
नेदानीं हि प्रवेक्ष्यामि नगरं वृषपर्वणः ॥ २४

वैशंपायन उवाच ।

सा तु वै त्वरितं गत्वा घूर्णिकासुरमन्दिरम् ।
दृष्ट्वा काव्यमुवाचेदं संभ्रमाविष्टचेतना ॥ २५
आचक्षे ते महाप्राज्ञ देवयानी वने हता ।
शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ॥ २६
श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम् ।
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने ॥ २७
दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने ।
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् ॥ २८

---

चैषा (G3 चैव) ब्राह्मणी चेति विज्ञायैनां स नाहुषः. — c) G1-3 उक्तो गृहीत्वा पाणिं ताम्; M °त्वा दक्षिणं पाणिम्.

23 b) Ko °स्कूपादरिंदमः; D2 विज्ञाय नहुषात्मजः. — After $23^{ab}$, D3.4 S ins.:

730* ययातिः ।
गच्छ भद्रे यथाकामं न भयं विद्यते तव ।
इत्युच्यमाना नृपतिं देवयानीदमुत्तरम् ।
उवाच मामुपादाय गच्छ शीघ्रं प्रियोऽसि मे ।
गृहीताहं त्वया पाणौ तस्माद्भर्ता भविष्यसि ।
इत्येवमुक्तो नृपतिराह क्षत्रकुलोद्भवः । [5]
त्वं भद्रे ब्राह्मणी तस्मान्मया नार्हसि संगमम् ।
सर्वलोकगुरुः काव्यस्त्वं तस्य दुहितासि वै ।
तस्मादपि भयं मेऽद्य तस्मात्कल्याणि नार्हसि ।
देवयानी ।
यदि मद्वचनान्नाद्य मां नेच्छसि नराधिप ।
त्वामेव वरये पित्रा पश्चाज्ज्ञास्यसि गच्छ हि । [10]

[ D3.4 ययातिरुवाच. — (L. 1) M6-8 नावमन्ये वचस्तव. — (L. 3) D3 T1 G1-6 मां त्वमादाय. D4 G4-6 M6-8 °यो हि मे. — (L. 4) G4.5 यत्; G6 या (for अहं). — (L. 6) T1 G4-6 भद्रे त्वं (by transp.). — (L. 7) D4 दुहिता शुभे; M6-8 °ता हि वै. — (L. 8) M6-8 तस्माद्भयं मे सुमहत्. — (L. 9) G1-3 M3.5 °सि परंतप. — (L. 10) D4 तस्माल्लप्स्यसि. T1 G1.2 M3.5 भूमिप; G3.6 गच्छसि. ]

— Before $23^{cd}$, D3.4 S ins. वैशं°. — After 23, all MSS. except K ins.:

731* गते तु नाहुषे तस्मिन्देवयान्यप्यनिन्दिता ।

D3.4 S cont.:

732* क्वचिदार्ता च रुदती वृक्षमाश्रित्य तिष्ठती ।
तस्मिंश्चिरायमाणायां दुहितर्याह भार्गवः ।
धात्रि त्वमानय क्षिप्रं देवयानीं शुचिस्मिताम् ।
इत्युक्तमात्रे सा धात्री त्वरितानयितुं गता ।
यत्र यत्र सखीभिः सा गता पदममार्गत । [5]
सा ददर्श तथा दीनां श्रमार्तां रुदतीं स्थिताम् ।
धात्री ।
वृत्तं ते किमिदं भद्रे शीघ्रं वद पिताह्वयत् ।
एवमुक्ताह धात्रीं तां शर्मिष्ठावृजिनं कृतम् ।

[ After line 2, D4 ins.:

733* संस्मृत्योवाच धात्रीं तां दुहितुः स्नेहविक्लवः ।

— (L. 3) D3 T1 M6-8 धात्र्यानयस्व भद्रं ते. — After line 6, G1.2 ins.:

734* अश्रुभिः स्नापयन्तीं तां पीनोन्नतकुचावुभौ ।
वृक्षमूलमुपाश्रित्य देवतामिव तद्वने ।

— (L. 8) D3 T2 G4-6 धात्रीमाह समाहूय; M3 सा धात्रीमाह त्वरिता; M5 धात्रीमाहातित्वरिता; M6-8 धात्रीमथाह त्वरिता. ]

— Ñ B D ins. after 731* (D3.4, after 732*):

735* उवाच शोकसंतप्ता घूर्णिकामागतां पुरः ।

[ Ñ1 ततः; Ñ2.3 B3 D1.2 पुनः; D5 वचः (for पुरः). ]

24 T G4-6 M om. देवयान्यु°. K1 D3 G1-3 om. उवाच. — a) G4 M त्वरिता. — b) Ñ1.2 B D (except D5) शीघ्रमाचक्ष्व. — c) S न हीदानीं (by transp.). Ñ1.2 B D (except D5) संप्रवे°.

25 K1 D3 S om. उवाच (M5 om. the ref.). — a) K0.4 सा तु वै (as in text); K2 सा तु सु-; Ñ B D सा तत्र (D5 ततः सा); G4.5 सा तदा; M सा तु प्र-. K1 सा त्वप्रत्वरितुं गत्वा (sic). — For 25, T G1-3.6 subst.:

736* त्वरितं घूर्णिका गत्वा प्रविवेश पुरोत्तमम् ।
द्विजप्रवरमासाद्य वचनं चेदमब्रवीत् ।

26 ab) Ñ1.2 B Da1 Dn D1.2.4 आचचक्षे (B1m as in text); Ñ3 D5 T1 G3 आचक्षते; Da2 G2 °क्षेत; D3 °ष्ट ते; M3 °क्ष्व ते; M7 °ष्टे ते. K1 महाप्रज्ञा; Ñ1.2 B1m.4.5 Da1 Dn1.n3 D1.4 °ब्रह्मन्; Ñ3 B3 Dn2 °प्राज्ञं; B1 D5 G1 °प्राज्ञा; B6 °प्रज्ञां; T2 G6 °प्राज्ञां. K0.2.4 Ñ1.2 B D (except D3.5; for D2 see below) T2 G6 °यानीं and हतां. Da2 मुने (for वने). D2 आचचक्षे देवयानीं महाप्रज्ञां वने हतां. — c) K0.4 सुचार्वंगि; K1.2 महाप्रज्ञा; Ñ3 °ब्रह्मन्; D5 °प्राज्ञ.

आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः ।
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता ॥ २९

देवयान्युवाच ।

निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम ।
शर्मिष्ठया यदुक्तास्मि दुहित्रा वृषपर्वणः ।
सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः ॥ ३०
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी ।
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशम् ॥ ३१
स्तुवतो दुहिता हि त्वं याचतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ ३२
इति मामाह शर्मिष्ठा दुहिता वृषपर्वणः ।
क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः ॥ ३३
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः ।
प्रसादयिष्ये शर्मिष्ठामित्युक्ता हि सखी मया ॥ ३४

शुक्र उवाच ।

स्तुवतो दुहिता न त्वं भद्रे न प्रतिगृह्णतः ।
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि ॥ ३५
वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः ।
अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम ॥ ३६

C. 1. 3315
B. 1. 78. 38
K. 1. 72. 49

इति श्रीमहाभारते आदिपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

27 b) Ko.4 तथा; D5 ततः; T G (except G4.5) हतां (for तत्र). T1 G1.2 वने; T2 G6 ततः; G3 मुने (for हताम्). — After $27^{ab}$, T G (except G4.5) ins.:

737* त्वरमाणोऽनुमार्गं स निश्चक्राम पुरोत्तमात् ।
[ T1 °माणेन मनसा; G3 °माणोनुमार्गः सन्. ]

Before $27^{cd}$, B5 ins. वैशं° उ°. — c) M8 °याभिययौ. G4.5 दुर्गात्. T G (except G4.5) सोनु(T1 °थ)गत्वा वनं (T2 G6 पदं) दुःखं (T2 G6 दुःखान्; G3 दुर्गं).

29 Before 29, D4 ins. शुक्र उ°. — a) S °दोषैर्न (T2 G6 °र्हि) ग°. — b) G4.5 सर्वे-. G1.4.5 दुःखं सुखं. M3.5 सर्वे दुःखानि जंतवः. — c) S पुरा दुश्चरितं मन्ये. — d) T1 G1.2 M तस्य ते; T2 G6 तस्मात्ते; G3 तस्य नो; G4.5 तव तन्. B (except B6) न्यकृतिः; B1m Cd as in text. G4.5 निष्कृतिं गता.

30 K1 S om. उवाच. — a) Ñ1 B (B8 marg.) D3 न्यकृतिर् (B1m.8 as in text); T2 G1.6 दुष्कृतिर्. S वा (for मे). Ñ8 T G मा वास्तु (by transp.); B (except B6) M8.5.6 वा मा वा. — b) T G (except G4.5) मुने (for मम). — c) T2 G4.5 यद्दुरुक्तं (for यदु°). — After $30^{d}$, T1 G1 repeat $27^{ab}$. — e) T1 त्वां प्राह; T2 G6 स्तोता त्वं; G1-3 सा त्वाह. — f) K2 (*sup. lin.*) S (except G1.2) गायकः.

31 ab) S (except G4.5) subst. for $31^{ab}$ (T1 G6 ins. before $31^{ab}$):

738* एवं मामाह शर्मिष्ठा शिष्या तव महामुने ।

— c) K2 रूक्षपरुषं. — d) T2 G °रक्तेक्षणं.

32 a) =(var.) $35^{a}$. Ñ1.2 B4 Da1 Dn D1.2.4 मित्यं; D5 T2 G4-6 M6-8 [ऽ]सि त्वं; G1-3 M5 त्वं वै (for हि त्वं). — K2 (hapl.) om. $32^{c}$–$34^{b}$. — c) Ñ1.2 B (except B5) D (except D5) अहं तु स्तू°.

33 K2 om. $33^{cd}$ (cf. v. l. 32), reading $33^{ab}$ in marg.; D1 om. 33–$34^{ab}$. — a) Dn D2.4 M3.5 इदं (for इति). — b) M बहुशो वार्षपर्वणी. — d) Ñ3 दर्पपूर्णानना वचः; S °पूर्णा(T1 मदघूर्णा-; G3 बाष्पपूर्णा)नना ततः. — After 33, D4 ins. 739*.

34 K2 D1 T1 om. $34^{ab}$ (cf. v. l. 32, 33). — c) T2 G6 प्रल्हाद°. M6-8 शर्मिष्ठे. — d) Ñ1.2 Dn D1.2.4 तु; M6-8 सा (for हि). G1.2 दासीवन्नित्यसेवया. — K4 D3 S ins. after 34: D4, after 33:

739* उक्त्वाप्येवं भृशं क्रुद्धा मां गृह्य विजने वने ।
कूपे प्रक्षेपयामास प्रक्षिप्यैव गृहं ययौ ।
[ (L. 2) K4 D4 प्राक्षिप्य गृहमागता (D4 °गमत्). ]

G1 cont.:

740* अमृतां मां मृतां मत्वा कूपेऽतीव निरूदके ।
अनावृत्तां निरीक्ष्यैव हृष्टा स्वभवनं ययौ ।

35 D1 om. 35–$36^{ab}$. K1 D8 S om. उवाच. — a) =(var.) $32^{a}$. K Ñ3 D5 दुहिता स्तुवतो (by transp.). B4 G4 हि त्वं; G5 त्वं हि. T2 G1-3.6 स्तुवतस्त्वं न दुहिता (by transp.). — b) B8m भद्रे वा; Dn D2.4 याचतः (cf. $32^{a}$).

36 D1 om. $36^{ab}$ (cf. v. l. 35). — a) S °पर्वा च. — b) K1 राजाथ. — c) D3 T1 G3 M5 ब्रह्म कल्याणि. — After $36^{c}$, G (except G3.6) ins.:

741* 　　　अहं वेद्मि न चापरे ।
गायश्चाहं तदेवेह.
[ (L. 2) G1.2 °श्चाहं. G4 तदा वेद. ]

C. 1. 3310
B. 1. 79. 1
K. 1. 73. 1

## ७४

शुक्र उवाच ।

यः परेषां नरो नित्यमतिवादांस्तितिक्षति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १
यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते ॥ २
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ ३
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४
यः संधारयते मन्युं योऽतिवादांस्तितिक्षति ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥ ५
यो यजेदपरिश्रान्तो मासि मासि शतं समाः ।

---

D3 T1 G3 M3.5 ins. after 36$^{c}$: G1.2.4.5, after 741*:

742* 　　　न स्तोता न च वन्दिता ।
　　मम विद्या हि निर्द्वन्द्वा.

[ (L. 1) D3 T1 M5 नैषां गाय(D3 °यी)नवं°; G3 नैव गानं न वं°; M3 नाहं गायनवंदिकः. — (L. 2) D3 T1 निर्द्वंद्वं. G1.2.4.5 ब्राह्मणोहमनिर्द्वंद्वं (G4.5 °हं च निर्यश्चं). ] — $^{d}$) T G (except G3) M3.5 ऐश्वर्यं; Cd ईश्वरं. D3 G3 बलं च तत्. — After 36, D3 G (except G6) ins.:

743* दैन्यं शाठ्यं च जैह्यं च नास्ति मे तत्त्वतः शुभे ।
　　[ D3 G3 मे यदधर्मतः. ]

Dn ins. after 36: Ko.4, before the first st. of the foll. adhy.:

744* यच्च किंचित्सर्वगतं भूमौ वा यदि वा दिवि ।
　　तस्याहमीश्वरो नित्यं तुष्टेनोक्तः स्वयंभुवा ।
　　अहं जलं विमुञ्चामि प्रजानां हितकाम्यया ।
　　पुष्णाम्यौषधयः सर्वा इति सत्यं ब्रवीमि ते ।
　　　　वैशंपायन उवाच ।
　　एवं विषादमापन्नां मन्युना संप्रपीडिताम् ।
　　वचनैर्मधुरैः श्लक्ष्णैः सान्त्वयामास तां पिता ।

Colophon om. in T1 G1.2. — *Major parvan:* T2 G3–6 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 संभव; to it they add ययात्युपाख्यान; while Ko.2.4 B D T2 G4 M5 (om. sub-parvan name) mention only ययात. — *Adhy. name:* Ko.4 T2 G4 देवयानीशर्मिष्ठाविवादः. — *Adhy. no.* (figures, words or both): Ko 75; B5 D3 72; Da1 D4 76; Dn2 77; T2 13; G3 15; G4–6 M 14. — *S'loka no.:* Ñ3 38; Da1 37; Dn 40; M3 51. — *Aggregate s'loka no.:* Dn2 3280.

### 74

☞ This adhy. is missing in Ś1 V1 (cf. v. l. 1. 68. 74; 72. 23); the MSS. are *wholly* ignored here.

1 St. 1-5$^{a}$ are missing in K3 (cf. v. l. 1. 72. 8). K1 S om. उवाच. — Before 1, Ko.4 ins. 744* (cf. v. l. 1. 73. 36). — $^{a}$) K1.2 परो नित्यम्. D3 T G (except G4.5) यो वै परेषामाक्रोशान्. — $^{b}$) = (var.) 5$^{b}$. Ñ B3.6 D (except Da D5) T2 G1.2.4.6 °तिक्षते; G3 °तीर्षति. — 1$^{cd}$ = 3$^{cd}$. — $^{d}$) D3 G1–3 सर्वं तस्य (G1.2 मम) जितं भवेत्. Cd cites सर्वमिदं.

2 K3 missing (cf. v. l. 1). K1 om. 2–3. B5 reads 2–3 after 4. K2 T1 om. 2. Before 2, T2 G1–3.6 M read 3$^{ab}$ and 4$^{cd}$. — $^{a}$) = 3$^{a}$ and 4$^{a}$. K4 कोपं (for क्रोधं). G4.5 interchange 2$^{b}$ and 3$^{b}$. S (except T1 G4.5) हयानिव. — $^{d}$) T2 G4–6 हयो (for न यो). D3 न हये रश्मिलंबिते.

3 K3 missing (cf. v. l. 1). K1 D5 om. 3 (cf. v. l. 2). — $^{a}$) = 2$^{a}$ and 4$^{a}$. — $^{b}$) Ko.2.4 Ñ3 नियच्छति; T G2.3.6 M व्यपास्यति. G1.4.5 °धेनैव हास्यति. — S om. 3$^{cd}$–4$^{ab}$. 3$^{cd}$ = 1$^{cd}$.

4 K3 missing (cf. v. l. 1). T1 om. 4–5. S om. 4$^{ab}$ (cf. v. l. 3). — $^{a}$) = 2$^{a}$ and 3$^{a}$. — $^{b}$) D3 अक्रोधेन व्यपास्यति (cf. 3$^{b}$ and v. l.).

5 K3 resumes with रयते (in $^{a}$). T1 om. 5 (cf v. l. 4). — $^{a}$) D3 S (T1 om.) यो वै मन्युं धारयति — $^{b}$) = (var.) 1$^{b}$. D3 T2 G (except G4.5) अपवादान्. K1.4 Ñ1.2 B3.4 D (except D2.5) तितिक्षते. — $^{d}$) K (except Ko) भृशं (for दृढं).

6 $^{a}$) S (except G4.5) अश्वमेधेन (for अपरि°). — $^{cd}$) K4 °श्च सर्वेभ्यः; B6 °त य आकुष्टः. K2.4 °धनो वरः. — For 6$^{cd}$, D3 S subst.:

745* तस्मादक्रोधनः श्रेष्ठः कामक्रोधौ न पूजितौ ।
　　क्रुद्धस्य निष्फलान्येव दानयज्ञतपांसि च ।
　　तस्मादक्रोधने यज्ञस्तपो दानं महत्फलम् ।
　　न पूतो न तपस्वी च न यज्वा न च धर्मकृत् ।
　　क्रोधस्य यो वशं गच्छेत्तस्य लोकद्वयं न च । [5]
　　पुत्रभृत्यसुहृन्मित्रभार्या धर्मश्च सत्यतः ।

न क्रुध्येद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ॥ ६
यत्कुमारा कुमार्यश्च वैरं कुर्युरचेतसः ।
न तत्प्राज्ञोऽनुकुर्वीत विदुस्ते न बलाबलम् ॥ ७
देवयान्युवाच ।
वेदाहं तात बालापि धर्माणां यदिहान्तरम् ।
अक्रोधे चातिवादे च वेद चापि बलाबलम् ॥ ८
शिष्यस्याशिष्यवृत्तेर्हि न क्षन्तव्यं बुभूषता ।
तस्मात्संकीर्णवृत्तेषु वासो मम न रोचते ॥ ९
पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च ।
न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु ॥ १०
ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन च ।
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ ११
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः ।
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु ।
यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते ॥ १२

C. 1. 3331
B. 1. 79. 13
K. 1. 73. 22

इति श्रीमहाभारते आदिपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

तस्यैतान्यपयास्यन्ति क्रोधशीलस्य निश्चितम् ।

7 a) K1 या; K3 G2 यः; T G1.3–6 M (except M8) यं (for यत्). K transp. कुमाराः and कुमार्यः. — b) D3 S वैरं कुर्युः स्त्रियोपि वा (D3 कुर्यात्स्त्रियोपि च; G2 कुर्यादकारणात्). — c) D3 T1 G3 M न तेन (D3 तेषु) वैरं; T2 G1.4–6 स तैर्न वैरं; G2 वैरं ताभ्यां न. — d) Ñ1.2 B6 Dn D1.2.4 न विदुस्ते (by transp.); D3 S विद्वांस्तस्य (G2 तयोर्विद्वान्; G3 विद्यात्तस्य). T2 G (except G2.3) तदा बलं.

8 K1 D3 S om. उवाच. — b) D3 T2 G यथनंतरं; T1 तदनंतरं. — c) D3 G4 अक्रोशे; T2 आक्रोधे; G2.6 आक्रोशे. K4 G1 वाति-; B3 चापि; B5 [ऽ]पि च. D5 °वादेपि. — d) K1 वेदाहं च बला°; D3 T G बुध्येहं (G1.2 °यं; G3 इत्येवं) गुरुलाघवं. — After 8, D3 S ins.:

746* स्ववृत्तिमननुष्ठाय धर्ममुत्सृज्य तत्त्वतः ।
[ D3 T2 G6 अतिप्रवृद्धरोपस्य; M6–8 स्वधर्ममन°. ]

9 a) Ñ1.2 B Da Dn D1.2.4 G5 °वृत्तेस्तु; D3 G3.4 °वृत्तिर्हि. — b) D3 T1 G1.2.4 M6–8 क्षंतव्या. — After 9ab, D3 S ins.:

747* शिष्ये चाचार्यवृत्तिं हि त्रिसृज्य विपथं गते ।
[ D3 G4.5 M6–8 प्रेष्यशिष्यार्थं°. ]

— c) D3 T G1–3 तस्मिन्. K3 B5 °वृत्तेस्तु; D3 T G1–3 °वृत्ते तु. — After 9, D3 S ins.:

748* दह्यमानास्तु तीव्रेण नीचाः परयशोऽग्निना ।
अशक्तास्तां गतिं गन्तुं ततो निन्दां प्रकुर्वते ।

10 a) K1 D2.3 S (except G5) पुमांसं (for पुमांसः, acc. plu.). K1 ये च; K3 ये ह; Ñ3 S येभि- (G2 as in text; M5 ये न); B6 येपि. — b) = 11b. Ñ B D (except Dn D5) T2 G3–6 M6–8 वा (for च). — c) K2.3 एतेषु न वसे°.

11 a) B3 त्वैनम्; B5 Da त्वे(B5 त्वै)वम्; M5 न त्वम्. K4 अभिनिंदंति; Ñ3 D3 S °नंदंति. — b) = 10b. Ñ1.2 B (except B4) D (except D3.5) वा (for च). — After 11, D3 S ins.:

749* सुयन्त्रिता नरा नित्यं विहीना वा धनैर्नराः ।
दुर्वृत्ताः पापकर्माणश्चण्डाला धनिनोऽपि वा ।
न हि जात्या च चण्डालाः स्वकर्मविहितैर्विना ।
धनाभिजनविद्यासु सक्ताश्चण्डालधर्मिणः ।
अकारणाद्विद्विषन्ति परिवादं वदन्ति च । [5]
न तत्रास्य निवासोऽस्ति पापिभिः पापतां व्रजेत् ।
सुकृते दुष्कृते वापि यत्र सज्जति यो नरः ।
ध्रुवं रतिर्भवेत्तत्र तस्मात्तेषां न रोचये ।

[ (L. 3) T1 M6.7 स्वधर्म°. — (L. 6) T1 G4–6 पाप्मभिः. — (L. 8) D3 G4–6 तस्माद्दोषं. D3 T2 G1–3 रोचयेत्. ]

— After 11, K ins. 750*.

12 ab) Cd cites वाग्दुरुक्तं. D3 S वाचा दुरुक्तं (T1 यदुक्तं) तातेह दुहित्रा वृष°. — K ins. after 11: Ñ B D (except D3.5), after 12ab:

750* मम मथ्नाति हृदयमग्निकाम इवारणिम् ।
[ K अग्निकामोरणिमिव मथ्नाति हृदयं मम. ]

— cd) K1 तद्धतो दुष्कर°. Ko B Da transp. अपि and त्रिषु. D3 S नातो दुःखतरं मन्ये त्रिषु लोकेष्वपि ध्रुवं. — After 12cd, D3 S ins.:

751* निःसंशयो विशेषेण पुरुषं मर्मकृन्तनम् ।
सुहृन्मित्रजनास्तेषु सौहृदं न च कुर्वते ।

— G4 om. 12cd. — e) Ñ3 संपत्नश्रियं; D3 S (G4 om.) सपत्ने श्रि°.

[ ☞ After 12, the Calc. (*editio princeps*), Bomb., Kumbh., Grantha, P. C. Roy's ed., all ins.:

752* मरणं शोभनं तस्य इति विद्वज्जना विदुः ।

C. 1. 3332
B. 1. 80. 1
K. 1. 74 1

७५

वैशंपायन उवाच ।
ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह ।
वृषपर्वाणमासीनमित्युवाचाविचारयन् ॥ १
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ।
फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे ॥ २
यदघातयथा विप्रं कचमाङ्गिरसं तदा ।
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ॥ ३
वधादनर्हतस्तस्य वधाच्च दुहितुर्मम ।
वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम् ।

---

a line not found in *any* of the sixty MSS. collated: typical for the process of the growth of the epic corpus ! ]

— D8 S ins. after 12 (G4, which om. 12ef, ins. after 751*):

753* अवमानमवाप्नोति शनैर्नीचेषु संगतः ।
अतिवादा वक्त्रतो निःसरन्ति
यैराहतः शोचति राज्यहानि ।
परस्य वै मर्मसु ये पतन्ति
तान्पण्डितो नावसृजेत्परेषु ।
शनैर्दुःखं शस्त्रविषाग्निजातं
रोहेत्स संरोहति वाग्व्रणं तु ॥
संरोहति शनैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ।

[ (L. 1) G1.2 नीचेषु संवृतः; M8.5 नीचसमागमात्. — With the (three-lined) Triṣṭubh st. cf. 1. 82. 11, with which it has the second, third and fourth pāda in common. For the first pāda, T2 G6 subst. 1. 82. 11a; G3.6 M om. the third and fourth pādas. ]

Colophon om. in G8. — *Major parvan:* T G (G3 om.) M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान; while Ko.2-4 Ñ3 B D G4 (om. sub-parvan name) mention only ययात. — *Adhy. name:* Ko.4 क्रोधनिंदा; T2 G4 शुक्रदेवयानीसंवादः. — *Adhy. no.* (figures, words or both): Ko 76; B5 D3 73; Da1 D4 77; Dn8 78; T1 64; T2 14; G (G3 om.) M 15. — *S'loka no.:* Ñ3 Da1 Dn 13; M8 24.

## 75

☞ This adhy. is missing in Ś1 V1 (cf. v. l. 1. 68. 74; 72. 23); the MSS. are *wholly* ignored here.

1 K1 D8 S om. उवाच. — a) D2 G5 गुरुश्रेष्ठः; D5 द्विज°. — b) S (except G3) च (for ह). — After 1ab, D3.4 S ins.:

754* प्रविश्यान्तःपुरं शुक्रो वन्दितो वृषपर्वणा ।
[ D4 अंतःपुरं प्रविश्यैव विदितो वृष°. ]

G1.2.4.5 cont.:

755* स प्रविश्यासने शुक्रः संदष्टोष्ठपुटो रुषा ।

— d) Ko.3 °वाचाव(Ko °वि)चा°; Da1 D1-3 G3 °वाच विचा°.

2 Before 2, B1 marg. ins. शुक्र उ°. — 2ab =(var.) Manu 4. 172ab. — a) Da1 T2 G3.6 अधर्मः; D2 न धर्मः. D5 G4.5 Manu लोके (for राजन्). — After 2ab, Ko.2.4 Dn D3 ins.:

756* शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति ।

[ =(var.) Manu 4. 172cd (v. l. तु for हि). Ko °मानस्य; K2.4 D3 °मानस्तु. K2.4 D3 मूलान्यपि नि(K4 हि)कृंत°. ]

— With 2cd cf. Manu 4. 173ab. — c) G1 वा न पशुषु; G2 वाथ नप्त्रेषु. — d) K1 दृश्यते; M8.5 पश्यसि. — e) K3 B5.6 G1.2 M7 °त्येवं. — f) K3.4 Da1 Dn2 T1 G5 M5 गुरुभक्त°. — After 2, D8 S (except T1) ins.:

757* अधीयानं हि तं राजन्क्षमावन्तं जितेन्द्रियम् ।

3 a) Dn1.n2 D4.5 °घातयिथा; D3 G4 M यज्जघान पुरा (D3 यथा; G1 यदा). — b) D3 G M3.5 तथा. — c) T1 अपापं धर्मशीलज्ञं. — d) A few MSS. शुश्रूषं. B5 मद्गृहे चरं; T2 G6 °ह्योषितं; M3 °ह्यागतं; M5 °हे गतं. D5 शुश्रूषायां धृतव्रतं. — After 3, D3.4 S ins.:

758* शर्मिष्ठया देवयानी क्रूरमुक्ता बहु प्रभो ।
विप्रकृत्य च संरम्भात्कूपे क्षिप्ता मनस्विनी ।
सा न कल्पेत वासाय तया हि रहितः कथम् ।
वसेयमिह तस्मात्ते त्यजामि विषयं नृप ।

[ (L. 3) D4 सा न वत्स्यति ते देशे. — (L. 4) T1 G1.2.4 कस्मात्ते. D4 तव (for नृप). ]

4 D8 S om. 4ab. — c) K (except K1) D (except D5) T1 °पर्व नि°. D5 °बोध त्वं. — d) T1 त्यक्षे त्वां

स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह ॥ ४
अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
यथेममात्मनो दोषं न नियच्छस्युपेक्षसे ॥ ५

वृषपर्वोवाच ।

नाधर्मं न मृषावादं त्वयि जानामि भार्गव ।
त्वयि धर्मश्च सत्यं च तत्प्रसीदतु नो भवान् ॥ ६
यद्यस्मानपहाय त्वमितो गच्छसि भार्गव ।
समुद्रं संप्रवेक्ष्यामो नान्यदस्ति परायणम् ॥ ७

शुक्र उवाच ।

समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः ।
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे ॥ ८
प्रसाद्यतां देवयानी जीवितं ह्यत्र मे स्थितम् ।
योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः ॥ ९

वृषपर्वोवाच ।

यत्किंचिदसुरेन्द्राणां विद्यते वसु भार्गव ।
भुवि हस्तिगवाश्वं वा तस्य त्वं मम चेश्वरः ॥ १०

शुक्र उवाच ।

यत्किंचिदस्ति द्रविणं दैत्येन्द्राणां महासुर ।
तस्येश्वरोऽस्मि यदि ते देवयानी प्रसाद्यताम् ॥ ११

देवयान्युवाच ।

यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् ॥ १२ C. 1. 3345 B. 1. 80. 14 K. 1. 74. 19

---

सहबांधवं. — $D_3$ S ins. after $4^{cd}$: $D_4$, after $4^{ef}$:

759* मा शोचीर्वृषपर्वंस्त्वं मा क्रुध्यस्व विशां पते ।
[ $T_1$ शुचः; $T_2$ शोचे. $T_2$ $G_6$ रुधस्त्वं; $M_{3.5}$ क्रुधध्वं. ]

— $^{e}$) S ते (for त्वद्-). — $^{f}$) $K_1$ B (except $B_3$) शक्यामि ($B_4$m as in text). $D_3$ $T_2$ $G_{4-6}$ $M_{3.5}$ तया विना; $T_1$ $G_{1-3}$ $M_{6-8}$ विना तया. — $D_3$ S ins. after 4; $D_4$, after 759* above:

760* अस्या गतिर्गतिर्मह्यं प्रियमस्याः प्रियं मम ।
वृषपर्वा ।
यदि ब्रह्मन्घातयामि यदि चोपदिशाम्यहम् ।
शर्मिष्ठया देवयानीं तेन गच्छाम्यसद्गतिम् ।
[ $D_4$ वृषपर्वोवाच. — (L. 2) $G_{1.2}$ $M_{3.5}$ चाक्रोशया°; $G_{4.5}$ वोपदिशा°. ]

5 Before 5, $D_4$ ins. शुक्र उ°; S शुक्रः. — $^{b}$) $M_{3.5}$ °प्रवादिनं. — $^{c}$) $K_3$ यस्त्वं तमात्मनो; $Ñ_{1.2}$ यथेष्टमा°; $D_5$ यथैतदा°; $T_1$ $G_{1-3}$ तथैव चा° ($T_1$ °मा°); $T_2$ $G_6$ तथेममा°; $G_{4.5}$ तदेवमा°; M तथेदमा°. — $^{d}$) S मयि कर्तुं चिकीर्षसि.

6 $K_1$ S om. उवाच. — $^{a}$) S मृषोक्तं वा. — $^{c}$) $D_{3.5}$ त्वयि धर्मं च. $Ñ_3$ $B_5$ S त्वयि सत्यं च धर्मं च ($Ñ_3$ $B_5$ $G_1$ °र्मश्च). — $^{d}$) $K_2$ मे (for नो). S विजानामि प्रसीद मे.

7 $^{a}$) $D_5$ सपद्यस्मान्विहाय त्वम्. — $^{c}$) T G $M_3$ संप्रवेक्ष्यामि. — After $7^{c}$, T G (except $G_{3.5}$) ins.:

761* पूर्वं मद्बान्धवैः सह ।
पातालमथ वा चाग्निं.

— $^{d}$) K $D_5$ नान्यन्नोस्ति. — After 7, $D_{3.4}$ S ins.:

762* यद्येव देवान्गच्छेस्त्वं मां च त्यक्त्वा गृहाधिप ।
सर्वत्यागं ततः कृत्वा प्रविशामि हुताशनम् ।

8 $K_1$ S om. उवाच. $B_5$ om. शुक्र उ°. — $^{a}$) $K_2$ $D_3$ S प्रविश त्वं. — $^{b}$) $K_{1.3.4}$ $D_5$ व्रजता°; $K_2$ $D_4$ गच्छता°. $K_0$ दिशो व्रजत वा°; $D_3$ S अ($D_3$ $T_1$ ह्य)ग्निं प्रज्वलितं तथा ($M_{3.5}$ ज्वलितं वा हुताशनं).

9 $^{b}$) $K_{0.2}$ $B_6$ D $T_2$ $G_6$ $M_{6.7}$ यत्र; $Ñ_{1.2}$ तत्र. — After $9^{ab}$, $D_{3.4}$ S ins.:

763* प्रसन्ना देवयानी चेत्प्रियं नान्यतरं मम ।

— $^{c}$) K °वहस्तेहम्; $G_6$ °करं मे स्याद्.

10 $K_1$ S om. उवाच. $K_2$ (hapl.) om. 10. — $^{b}$) $Ñ_3$ S वसु विद्यति ($G_{4.5}$ $M_{6-8}$ विद्येत) भार्गव. — $^{c}$) $K_{1.4}$ $B_3$ Da $D_2$ भूमिहस्ति°; S मम हस्ति°. $K_1$ हि; $K_{3.4}$ Dn $D_5$ च (for वा). — $^{d}$) $G_2$ त्वममरेश्वरः.

11 $K_1$ S om. उवाच. $K_3$ om. शुक्र उ°. — $^{a}$) Da $D_2$ द्रविणं ह्यत्र; $T_2$ अस्ति ग्रहणं; $G_4$ अस्ति श्रवणं. $Ñ_3$ यदस्ति किंचिद्द्रविणं (by transp.). — $^{b}$) T $G_{1.6}$ इहासुर. — $B_5$ repeats $11^{cd}$ (with v. l.). — $^{c}$) $B_6$ तवेश्व°; S °श्वरोहं. $Ñ_{1.3}$ S यदि चेत्; $B_{1.4.5}$ (second time).6 यदि वै; $B_{3.5}$ (first time) D (except $D_{3.5}$) यद्येषा. — $K_{0.4}$ Da1 ins. after 11: $D_3$, after 766*:

764* वैशंपायन उवाच ।
ततस्तु त्वरितं शुक्रस्तेन राज्ञा समं ययौ ।
उवाच चैनां सुभगे प्रतिपन्नं वचस्तव ।
[ (L. 1) $D_3$ तच्छ्रुत्वा त्वरि°. ]

After 11, Dn $D_{1.4}$ ins.:

765* वैशंपायन उवाच ।
एवमुक्तस्तथेत्याह वृषपर्वा महाकविः ।
देवयान्यन्तिकं गत्वा तमर्थं प्राह भार्गवः ।;

वृषपर्वोवाच ।

यं काममभिकामासि देवयानि शुचिस्मिते ।
तत्तेऽहं संप्रदास्यामि यदि चेदपि दुर्लभम् ॥ १३

देवयान्युवाच ।

दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये ।
अनु मां तत्र गच्छेत्सा यत्र दास्यति मे पिता ॥१४

वृषपर्वोवाच ।

उत्तिष्ठ हे संग्रहीत्रि शर्मिष्ठां शीघ्रमानय ।
यं च कामयते कामं देवयानी करोतु तम् ॥ १५

वैशंपायन उवाच ।

ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत् ।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ १६
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः ।
सा यं कामयते कामं स कार्योऽद्य त्वयानघे ॥ १७

शर्मिष्ठोवाच ।

सा यं कामयते कामं करवाण्यहमद्य तम् ।
मा त्वेवापगमच्छुक्रो देवयानी च मत्कृते ॥ १८

वैशंपायन उवाच ।

ततः कन्यासहस्रेण वृता शिबिकया तदा ।
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् ॥ १९

शर्मिष्ठोवाच ।

अहं कन्यासहस्रेण दासी ते परिचारिका ।
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता ॥२०

देवयान्युवाच ।

स्तुवतो दुहिता तेऽहं बन्दिनः प्रतिगृह्णतः ।
स्तूयमानस्य दुहिता कथं दासी भविष्यसि ॥ २१

---

while D3 S ins.:

766* वैशंपायनः ।
शुक्रस्य वचनं श्रुत्वा वृषपर्वा सबान्धवः ।
देवयानीं प्रसीदेति पपात भुवि पादयोः ।

which in D3 is followed by 764*.

12 K1 S om. उवाच. — b) G3 °स्य बांधवः. — c) G5 न हि जानामि. M6-8 तत्वेन (for तत्तेऽहं).

13 K1 S om. उवाच. — After वृषपर्वा (resp. °र्वोवाच), D3.4 S ins.:

767* स्तुत्यो वन्द्यश्च सततं मया तातश्च ते शुभे ।

— a) D3 T2 G4-6 यत्कामं. Ñ1 G1-3 अभिजानासि. — c) B1.6 Da2 Dn D4 तं तेहं. B5 Dn1 संप्रवक्ष्यामि. — d) K यद्यपि स्यात्सु-; B1.5 Da Dn D1.2.4 T1 यदि वापि हि (T1 ह); Ñ1 यदि वात्यंत-; D5 यदि स्यादपि; G1-3 यदि वा(G3 चा)पीह. K1 D6 दुष्प्रदं; B1 (m as in text).3-5 दुर्दंदं; B6 D2 दुर्ह्रदं; D3 दुर्वहं; T G (except G4.5) दुस्त्यजं.

14 K1 D3 S om. उवाच. — a) G4.5 दासीनां तु स°. — b) K3 अभिकांक्षये; G1 °रोचये. — c) K3 transp. मां and सा. Ñ3 अनु मामनुगच्छेच्च; S अनु(G1.2 अभि)गच्छेत्तु (G4.5 M3.5 °गच्छतु) सा मह्यं (T G1.2.5.6 मां हि; M3.5 मां तु). — d) K Ñ1.3 B5 D (except D3) दद्याच्च (K3 °स्स; B5 °त्तु) मे.

15 K1 S om. उवाच. — a) Ñ B D (except D3) उत्तिष्ठ त्वं गच्छ धात्रि (B1m हे सम्प्रहीत्रि त्वं गच्छ); S उत्तिष्ठ हे सं(G2 सु)गतिके. — c) S यच्च (M6-8 यं च) कामयते कर्तुं. — d) K1.2 S करोतु तत् (G3 शुचिस्मिता). — After 15, D3 T G (except G3) ins.:

768* त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।

16 K1 D3 S om. उवाच. — a) K0.4 गता तत्र; S गृहं गत्वा. — After 16ab, D4 ins. धात्र्युवाच.

17 a) T G (except G6) M3 शिष्यं. — b) K0.2.4 D2 प्रनो(D2 °णो)दितः. — c)=18a. B D3 (by transp.) यं सा (B4 यं यं). K1 transp. काम° and कामं. — d) D3 त्वया शुभे. S देवयानी कुरुष्व तं (T G4-6 तत्).

18 K1 D3 S om. उवाच. — a)=17c. K0.4 D5 यं यं; K2.3 Ñ B Da Dn D1-4 यं सा (by transp.). Ñ3 °यते कार्यं. — After 18ab, B3 D (except D3.5) M3.6.7 ins.:

769* यद्येवमाह्वयेच्छुक्रो देवयानीकृते हि माम् ।

— c) K मद्रूपान्मा ग°; Dn D1.4.5 मद्दोषान्मा ग°. B त्वेवापागम°; D3 T2 G4.6 M °गमे°. — d) G6 देवयान्या प्रचोदितः.

19 K1 D2.3 S om. उवाच. — ab) S (except M5) transp. ततः and वृता (T1 further reads तथा for ततः). B4 गिरिकया तदा. — c) T2 G6 M3.5 °र्निदेशात्.

20 K1 S om. उवाच (G5 om. the ref.). — a) D1 ततः. Ñ B (except B5) D (except D1.5) S (except M5-8) दासीसहस्रेण. — After 20ab, D3 T1 ins.:

770* चण्डालेऽपि नियुक्तस्याथ शिरसा धारयामि तम् ।
गुरुं वा स्पर्शयाम्यत्र दासीनां धर्मसुत्तमम् ।

शर्मिष्ठोवाच ।
येन केनचिदार्तानां ज्ञातीनां सुखमावहेत् ।
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता ॥ २२
वैशंपायन उवाच ।
प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः ।
देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत् ॥ २३
प्रविशामि पुरं तात तुष्टास्मि द्विजसत्तम ।
अमोघं तव विज्ञानमस्ति विद्याबलं च ते ॥ २४
एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः ।
प्रविवेश पुरं हृष्टः पूजितः सर्वदानवैः ॥ २५

इति श्रीमहाभारते आदिपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## ७६

वैशंपायन उवाच ।
अथ दीर्घस्य कालस्य देवयानी नृपोत्तम ।
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी ॥ १
तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा ।
तमेव देशं संप्राप्ता यथाकामं चचार सा ।
ताभिः सखीभिः सहिता सर्वाभिर्मुदिता भृशम् ॥२
क्रीडन्त्योऽभिरताः सर्वाः पिबन्त्यो मधुमाधवीम् ।
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च॥३
पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया ।
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ॥ ४

C. 1. 3363
B. 1. 81. 5
K. 1. 75. 5

— $^{c}$) G1 M6–8 अनुत्तवा. Some S MSS. त्वा (for त्वां) Ñ3 अनु (for तत्र).

21 K1 D8 S om. उवाच. B3 om. देवयान्यु°. — $^{a}$) Ñ1.2 B D (except D5) [ऽ]हं ते (by transp.); S चाहं. — $^{b}$) K2 Ñ1 B D (except D5) याचतः प्रति° (cf. 1. 73. 10, 32). — $^{d}$) Ñ3 Da1 G1 (before corr.).2.5 भविष्यति.

22 K1 S om. उवाच. — $^{a}$) G4.5 यो (G5 ये) नु कश्चि(G5 केचि)दिहार्तानां. — $^{b}$) K1 B5 Da Dn1.n3 D5 T1 सुखमावहे; T2 G6 यत्सुखावहं; G5 स्वयमावहेत्; M5 °मावहत्. — After 22$^{ab}$, D3.4 (om. line 1) S ins.:

771* सर्वमाहृत्य कर्तव्यमेष धर्मः सनातनः ।
एवं कृत्वा करिष्यामि यन्मां वक्ष्यसि शोभने ।
[ (L. 1) G2.6 M3 सर्वमादत्य. ]

— $^{d}$) Ko om. 22$^{d}$–23$^{a}$.

23 Ko om. वैशं° उ° and 23$^{a}$ (cf. v. l. 22). K1 D8 S om. उवाच. — $^{a}$) G (except G6) दास्यभावे. — $^{d}$) T G6 पितरं तमथाब्र°; G2.3 द्विजश्रेष्ठमथा(G3 °ष्ठं यदा)ब्रवीत्.

24 Before 24, Dn D1.4.5 ins. देवयान्युवाच; M8.5 देवयानी. — $^{a}$) Ñ3 T2 G3.6 प्रविशाम; T1 °मः. — $^{d}$) B4 ज्ञानबलं.

25 Before 25, Dn D1.4 ins. वैशं° उ°. — $^{ab}$) K1 B5 transp. दुहित्रा स and द्विज°. T G2–5 M3.5.8 भृगुश्रेष्ठो; G1 गुरु°. S महातपाः.

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान; while K B D M (om. sub-parvan name) mention only ययात. — *Adhy. name:* Ko.2.3 देवयानीप्रसादः; T2 G1.4 M3.5 शर्मिष्ठादास्य(T2 °सी-; M8.5 °स)भावः. — *Adhy. no.* (figures, words or both): Ko 77; B5 D3 74; Da1 D4 78; Dn3 79; T1 65; T2 15; G M 16. — *S'loka no.:* Ñ3 26; Da1 Dn 27; M3 34. — *Aggregate s'loka no.:* Dn2 3329.

## 76

☞ This adhy. is missing in Ś1 V1 (cf. v. l. 1. 68. 74; 72. 23); the MSS. are *wholly* ignored here.

1 K1.3 D5 S om. उवाच. — $^{a}$) T G (except G4.5) दीर्घेण कालेन.

2 $^{b}$) K1 तया (for सार्धं). Ko.3 D3 T M6–8 तया; K1.2 G1.6 सह; Ñ3 G1 (by corr.).4 तथा. — K1 (hapl.) om. 2$^{d}$–4$^{c}$. — $^{d}$) K (K1 om.) D5 ह (for सा).

3 K1 om. 3 (cf. v. l. 2). — $^{a}$) S (except M8.5) क्रीडित्वोपरताः. — $^{b}$) T G6 °माध्विकं; G1–5 M3.5 °माधवं; M6–8 °मासवं. — $^{c}$) A few MSS. भक्षान्. — $^{d}$) B6 Dn1 G1.2.5.6 विदंशंत्यः.

4 K1 om. 4$^{abc}$ (cf. v. l. 2). — $^{b}$) T2 G (except G4.5) पिपासया (for यदृ°). — $^{d}$) K1 Ñ3 B1.3.4.6 Dn1.n2 D1.2 °कर्षितः; B5 Da1 समकर्षितः; D8 परितर्पि°.

C. 1. 3363
B. 1. 81. 5
K. 1. 75. 5

ददृशे देवयानीं च शर्मिष्ठां ताश्च योषितः ।
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः ॥ ५
उपविष्टां च ददृशे देवयानीं शुचिस्मिताम् ।
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनाम् ।
शर्मिष्ठया सेव्यमानां पादसंवाहनादिभिः ॥ ६

यथातिरुवाच ।

द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते ।
गोत्रे च नामनी चैव द्वयोः पृच्छामि वामहम् ॥ ७

देवयान्युवाच ।

आख्यास्याम्यहमादत्स्व वचनं मे नराधिप ।
शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम् ॥ ८
इयं च मे सखी दासी यत्राहं तत्र गामिनी ।
दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ ९

ययातिरुवाच ।

कथं नु ते सखी दासी कन्येयं वरवर्णिनी ।
असुरेन्द्रसुता सुभ्रु परं कौतूहलं हि मे ॥ १०

देवयान्युवाच ।

सर्व एव नरव्याघ्र विधानमनुवर्तते ।
विधानविहितं मत्वा मा विचित्राः कथाः कृथाः ॥ ११
राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च ।
किंनामा त्वं कुतश्चासि कस्य पुत्रश्च शंस मे ॥ १२

ययातिरुवाच ।

ब्रह्मचर्येण कृत्स्नो मे वेदः श्रुतिपथं गतः ।
राजाहं राजपुत्रश्च ययातिरिति विश्रुतः ॥ १३

देवयान्युवाच ।

केनास्यर्थेन नृपते इमं देशमुपागतः ।

---

5 $^{a}$) K1 S (except M6.7) ददर्श. Ñ B D G1.2 M स; T1 तां (for च). — Ñ1 om. 5$^{cd}$. — $^{c}$) Ko Ñ3 D5 M पिबंत्यो. K1 °नैनुमानाश्च; K3 °लींड°; D8 °र्लोल°; D5 °र्लील°; T2 G6 °र्वल°; G1.2 °र्लज्ज°; G8 °र्ललना: सर्वा:; M3.5.7 °र्लव°; M6.8 °र्लप°. T1 ता: (for च). — $^{d}$) S (except M7) सर्वाभरण°. — After 5, S ins.:

772* आसनप्रवरे दिव्ये सर्वरत्नविभूषिते ।
[ M °वरे श्रेष्ठे. G3 सर्वाभरणभूषिते (cf. 5$^{d}$). ]

6 $^{a}$) S सुकेशांतां (for च ददृशे). — $^{cd}$) K1 स्त्रीणां तासां (by transp.). Ko D3 वराननां; K1 सुमध्यमां. — After 6$^{cd}$, S ins.:

773* आसनाच्च ततः किंचिद्विहीनां हेमभूषिताम् ।
असुरेन्द्रसुतां चापि शर्मिष्ठां चारुहासिनीम् ।

— $^{ef}$) S ददर्श पादौ विप्रायाः संवाहंतीमनिंदितां. — After 6, S ins.:

774* गायन्त्यश्चैव नृत्यन्त्यो वादयन्त्यश्च भारत ।
दृष्ट्वा ययातिं ललना लज्जयावनताः स्थिताः ।

7 D3 om. 7. K1 यायातिः; T2 G1–4.6 M ययातिः; Da1 T1 G5 om. the ref. — $^{a}$) S युवां कन्यासहस्रेण. — $^{c}$) S नामधेये च. — $^{d}$) T2 G6 श्रोतुमिच्छामि. Ñ1.2 B D (except D5; D3 om.) °च्छाम्यहं शुभे (B1 च वां). — Cd cites वां (= युवां) as in text.

8 K1 S om. उवाच. — $^{a}$) K2.4 T1 G2.5 °माधत्स्व. — $^{b}$) T G (except G4.5) नरोत्तम. — $^{d}$) K1 तस्य जानीहि मां सुतां (by transp.).

9 K2 (? hapl.) om. 9$^{cd}$–10$^{ab}$.

10 K2 om. 10$^{ab}$ (cf. v. l. 9). K1 D3 S om. उवाच. — $^{a}$) K1.4 Ñ B (except B1.4) D (except Da D3) G3 तु (for नु). — After 10$^{ab}$, D3 S ins.:

775* नैव देवी न गन्धर्वी न यक्षी न च किंनरी ।
एवंरूपा मया नारी दृष्टपूर्वा महीतले ।
श्रीरिवायतपद्माक्षी सर्वलक्षणशोभिता ।

— $^{c}$) K3.4 Ñ B (except B5) Da Dn D1.2.4.5 सुभ्रूः; D3 S कन्या. — $^{d}$) D3 S सर्वालंकारभूषिता (G1–3 °संयुता). — After 10, D3 S ins.:

776* दैवेनोपहता सुभ्रूरुताहो तपसापि वा ।
अन्यथैषानवद्याङ्गी दासी नेह भविष्यति ।

G1.2 cont.:

777* अस्या रूपेण ते रूपं न किंचित्सदृशं भवेत् ।
पुरा दुश्चरितेनेयं तव दासी भवत्यहो ।

11 K1 S om. उवाच. D3 om. 11–13. — $^{a}$) Ko.3.4 सर्वमेतत्; Ñ2 सर्वश्चैव. Ñ1.2 B1–5 Da D2.5 नृपश्रेष्ठ; B6 Dn D1.4 नरश्रेष्ठ. — $^{c}$) K D5 M6–8 विधातृ° (K1 विधार्द°); B6 °नमम्लृतं; T1 G1–3 °मवशागां. K (except Ko) D5 ज्ञात्वा. — $^{d}$) K (except K1) विचित्रीः. Ko शुभाः; K1 कुरु (for कृथाः). Ñ3 कृथाः कथां. S मा विचारय सुव्रत.

12 D3 om. 12 (cf. v. l. 11). — $^{a}$) A few MSS. °वेशौ. D5 °वेषस्ते. G1 राजेन्द्र रूपवे°. — $^{c}$) K2 B1.6 T1 किं नाम; Ñ B1m.4 Dn D1.4 T2 G M को नाम (G1

जिघृक्षुर्वारिजं किंचिदथवा मृगलिप्सया ॥ १४
यया‍तिरुवाच ।
मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः ।
बहु चाप्यनुयुक्तोऽस्मि तन्मानुज्ञातुमर्हसि ॥ १५
देवयान्युवाच ।
द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह ।
त्वदधीनास्मि भद्रं ते सखा भर्ता च मे भव ॥ १६
ययातिरुवाच ।
विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भामिनि ।
अविवाह्या हि राजानो देवयानि पितुस्तव ॥ १७
देवयान्युवाच ।
संसृष्टं ब्रह्मणा क्षत्रं क्षत्रं च ब्रह्मसंहितम् ।
ऋषिश्च ऋषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥ १८
ययातिरुवाच ।
एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने ।
पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः ॥ १९
देवयान्युवाच ।
पाणिधर्मो नाहुषायं न पुंभिः सेवितः पुरा ।
तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः ॥ २०
कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत् । C. 1. 3360 B. 1. 81. 22 K. 1. 75. 30.

---

°ज्ञा; G2 °मा). K1 D5 असि (for त्वं). K1 त्वं (for असि). — d) K1 पुत्रः प्रशंस मे.

13 K1 S om. उवाच. D8 om. 13 (cf. v. l. 11). — ab) Ñ1.2 B D (for D5 see below) transp. कृत्स्नः and वेदः. Ñ3 D5 मे वेदः कृत्स्नः (by transp.). S कृत्स्ना(T G1.3.6 सर्वा)न्वै सांगान्वेदान्बिभर्म्यहं (G1.2.4–6 °न्विदाम्यहं; T2 °श्च वेद्म्यहं).

14 G3 om. 14–15. K1 S om. उवाच. — a) B5 D5 केन चार्थेन; T1 G1.2 केनार्थेनासि. — b) K2 D5 इदं वनम्. — c) D8 S (G3 om.) वा रिपुं कंचित् (G1.2 किंचि°; G6 कश्चि°).

15 G3 om. 15 (cf. v. l. 14). K1 D8 S om. उवाच. — b) K1 T G1.2.6 M3.5 °मिहागतः. — c) K0.3.4 Ñ B D (except D8) T2 G6 बहुधा. — d) K (except K1) Ñ1.2 B D तदनु°; Ñ3 मामनु°.

16 K1 D8 S om. उवाच. — a) D8 S अहं दासी(D8 कन्या)सहस्रेण (G3 °स्राणि). — d) S साधु (for सखा). Dn1 G1 त्वमेव च; M भवस्व मे (for च मे भव). — After 16, D3.4 (marg.) S ins.:

778* वैशंपायनः ।
असुरेन्द्रसुतामीक्ष्य तस्यां सक्तेन चेतसा ।
शर्मिष्ठा महिषी मह्यमिति मत्वा वचोऽब्रवीत् ।

[ (L. 2) G1.2 धर्मिष्ठा. D4 T1 G4.5 मत्वान्वचिन्तयत्. ]

17 K1 D8 S om. उवाच. — b) S त्वमर्हसि. Ñ B Dn D1.2.4 भाविनि. — c) G2 M अवैवाह्या. — d) M6–8 पितुस्तव यशस्विनि. — K0.4 D5 ins. after 17: D8, after 780*:

779* चतुर्णामपि वर्णानां विवाहं ब्राह्मणोऽर्हति ।
क्षत्रियाद्याः क्रमाधस्तास्तोत्तरोत्तरकारिणः ।
कामात्क्रोधादथो लोभाद्यत्किंचित्कुरुते नरः ।
देवयानि विजानीहि स गच्छेन्नरकं ध्रुवम् ।

After 17, D3.4 (marg.) S ins.:

780* परभार्या स्वसा ज्येष्ठा सगोत्रा पतिता स्नुषा ।
अपरा भिक्षुकास्वस्था अगम्याः कीर्तिता बुधैः ।

[ (L. 1) D4 M6–8 श्रेष्ठा. — (L. 2) D3.4 T2 G2.3 अवरा. T1 विमुखास्वस्था; G4–6 -भिगमा°. ]

— After 780*, D8 ins 779*.

18 K1 D8 S om. उवाच. — b) K1 हि; G2 वै (for च). Ñ1.2 B D (for D1 see below) T2 G1 M6–8 क्षत्रेण. K2 -संस्थितं; D5 संमितं; T2 G (except G6) M6–8 संयुतं. D1 क्षत्रे ब्रह्म समाहितं; T1 क्षत्रं ब्रह्म च संयुतं; M3.5 ब्रह्म क्षत्रेण संयुतं. — After 18ab, D3.4 (marg.) S ins.:

781* तयोरप्यन्यता नास्ति एकान्तरतमौ हि तौ ।

[ D8 °रभ्यन्तरं; T1 °रप्यन्यथा; T2 °रन्यान्यता; G3 °रन्यतरो; G4–6 °रप्यंतता; M °रन्यत्वता. D4 G4.5 °तमौ स्थितौ; M °समास्थितौ. ]

— c) K0.1.4 Ñ B (except B5) D (except D8) G1–3 M °श्चाप्यृषि°; K2 T1 °श्चास्यृषि°; K3 °श्चानृषि°; T2 G4–6 °स्त्वमृषि°. — d) K0 नाहुषाथ; B5 °ष त्वं.

19 K1 D8 S om. उवाच. — a) K0 एकगात्रोद्भवा; Ñ3 °कभावो°; T2 G एकत्रैवो° (G4.5 एते देवो°); M °कतश्चो°. — b) T1 G1.2 हि (for अपि). K B5 D5 वरानने. — c) K1 G1.2 transp. धर्माः and शौचाः. K2 वर्णाः (for धर्माः). — d) K1 हि; K2 T2 G4–6 च (for तु). K0.4 °णो गुरुः. T G (except G4) ब्राह्मणा वराः.

20 K1 D8 S om. उवाच. — a) K0 पाणिग्राहो; Cd as in text. D8 °पाद्य. S पाणिर्मे नाहुषायं वै (M3.5 °षायायं). — b) K1 यः (for न). G4.5 °भिः संगतः.

C. 1. 3380
B. 1. 81. 22
K. 1. 75. 30

गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया ॥ २१

ययातिरुवाच ।

क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्रः पुरुषेण विजानता ॥ २२

देवयान्युवाच ।

कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ ॥ २३

ययातिरुवाच ।

एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते ।
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः ॥२४
दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम ।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम्॥२५

देवयान्युवाच ।

दत्तां वहस्व पित्रा मां त्वं हि राजन्वृतो मया ।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥ २६

वैशंपायन उवाच ।

त्वरितं देवयान्याथ प्रेषितं पितुरात्मनः ।
श्रुत्वैव च स राजानं दर्शयामास भार्गवः ॥ २७

---

— $^{c}$) K (except $K_1$) तन्मे; $D_5$ पाणिं. S त्वमेव चाग्र°.

21 $^{a}$) $K_1$ त्व (? read तु); $K_4$ $D_{1-3}$ $T_2$ $G_{2.6}$ तु; $B_5$ हि (for नु). $G_{4.5}$ किं नु मे तु. $G_{1.3}$ तपस्विन्याः. — $^{b}$) $G_3$ पुमान्व्रजेत्. — $^{d}$) $K_2$ B (except $B_5$) $D_{2.5}$ चाप्य्°; $K_4$ नाहुषिणा; $D_3$ S पूर्वं नृप.

22 $K_0$ om. 22–23. $K_1$ $D_3$ S om. उवाच. — With $22^{abc}$ cf. $23^{abc}$. — $^{a}$) Here and in the foll. st. a few MSS. आसी° (for आशी°). $B_1m$ $D_3$ T G शस्त्रात् (for सर्पा°). — $^{d}$) $\tilde{N}_{1.2}$ B D (except $D_5$) ज्ञेयः पुंसा (for पुरु°). $T_2$ $G_{4-6}$ विपश्चिता.

23 $K_0$ om. 23 (cf. v. l. 22). $K_1$ $D_3$ S om. उवाच. — With $23^{abc}$ cf. $22^{abc}$. — $^{a}$) $B_1m$ $D_3$ T G शस्त्रात् (for सर्पात्). — $^{d}$) $T_2$ (hapl.) om. $23^{d}$–$25^{a}$. $D_{3.5}$ इत्याह. $G_6$ भरतर्षभ.

24 $T_2$ om. 24 (cf. v. l. 23). $K_1$ $D_3$ $T_1$ $G_{1.2.4-6}$ M om. उवाच; $D_1$ $G_3$ om. ययातिरु°. — $^{a}$) $B_5$ हन्यात्. — $^{b}$) $T_1$ $G_{4-6}$ M शस्त्रमेकं हनिष्यति ($M_{3.6-8}$ निकृंतति; $M_5$ निहंति च). — $^{cd}$) $K_{0-2}$ $D_5$ च (for हि). S ($T_2$ om.) सराष्ट्रं ($G_{1.2}$ °ज्यं) सबलं ($G_{1-5}$ सप्रजं) हंति विप्रः कोपेन कोपितः ($G_{4-6}$ संयु°; $M_3$ योजि°). — After 24, $D_3$ S ($T_2$ om.; $D_3$ $G_3$ om. line 1) ins.:

782* क्वचिदाशीविषो हन्याच्छस्त्रमन्यं निकृन्तति ।
यदृच्छयाग्निर्दहति मनसा हन्ति वै द्विजः ।

[ (L. 1) Cf. $24^{ab}$ and v. l. — M एकं (for अन्यं). ]

25 $^{a}$) $T_2$ om. $25^{a}$ (cf. v. l. 23). — $^{b}$) $K_1$ इति (for तस्मात्). $G_{1.2}$ भीरुतरो. — $^{c}$) $D_2$ प्रदत्तां; S न दत्तां (for ऽदत्तां च). — $^{d}$) $K_{0.3}$ विपयाम्यहं; $K_{1.2}$ $M_5$ Cd Arj. (comm.) विषहा°; $T_2$ G वरया°; Da (erroneously) Arjp विवहा° (as in text). ❀ Arj.: विवहामीति प्रायशः पाठः। ❀

26 $K_1$ $D_3$ S om. उवाच. $M_{6-8}$ om. 26. — $^{a}$) $\tilde{N}_3$ भजस्व (*sup. lin. sec. m.* वहस्व as in text); $T_1$ वरय. $\tilde{N}_{1.2}$ $B_{3.4.6}$ $Dn_{2}$.$n_3$ $D_{1.3}$ तन्मा त्वं; $\tilde{N}_3$ तस्मान्मां; $B_1$ Da $Dn_1$ $D_{2.4}$ तन्मां त्वं; $B_5$ मां पित्रा; T G $M_5$ राजेंद्र. — $^{b}$) $K_1$ तु (for हि). Ñ B D (except $D_5$) T G $M_{3.5}$ पित्रा राजन् ($B_5$ राजन्पूर्वं). $T_1$ transp. वृतः and मया. — $^{d}$) $B_6$ वा; $T_2$ तु; $G_{1.2}$ ते (for च). — After 26, $K_{0.3.4}$ $Da_1$ (all om. lines 2–3) $D_{3.4}$ (marg.) S (except $M_{6-8}$) ins.:

783* तिष्ठ राजन्मुहूर्तं त्वं प्रेषयिष्याम्यहं पितुः ।
गच्छ त्वं धात्रिके शीघ्रं ब्रह्मकल्पमिहानय ।
स्वयंवरे वृतं शीघ्रं निवेदय च नाहुषम् ।

27 $K_1$ $D_3$ S om. उवाच ($M_{6-8}$ om. the ref.). For $M_{3.5}$ see below. — $^{a}$) K (except $K_1$) त्वरिता. — $^{b}$) K $D_5$ प्रेषि($K_4$ °रि)ता; $\tilde{N}_{1.2}$ B Da Dn $D_{1.2.4}$ संदिष्टं. — After $27^{ab}$, $K_1$ $\tilde{N}_{1.3}$ B D ins.:

784* सर्वं निवेदयामास धात्री तस्मै यथातथम् ।

— $^{c}$) $K_1$ तं च (for च स). $D_3$ $M_{6-8}$ स श्रुत्वैव; $T_1$ $G_{1.3-5}$ श्रुत्वैव तु; $G_2$ °त्वैतत्तु. S (for $M_{3.5}$ see below) वचस्तत्र (for स रा°). — For 27, $M_{3.5}$ subst.:

785* ततो धात्रेयिका गत्वा शीघ्रं तूशनसं प्रति ।
दृष्ट्वा चैनं यथान्यायमभिवाद्येदमब्रवीत् ।
देवयान्या वृतो भर्ता नाहुषः पृथिवीपतिः ।
तत्रानुज्ञां कुरुष्वाद्य ब्रह्मन्सत्यपरायण ।
शुक्रः ।
गच्छ गच्छाग्रतो भद्रे गच्छामि सहितस्त्वया । [5]
करिष्यामि वचस्तस्याः पृष्ट्वा राजानमच्युतम् ।
वैशंपायनः ।
प्रादुरासीत्तदा शुक्रः प्रज्वलन्निव तेजसा ।
ब्राह्मणः सर्वभूतानि तेजोराशिः प्रकाशयन् ।

दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः ॥ २८

देवयान्युवाच ।

राजायं नाहुषस्तात दुर्गे मे पाणिमग्रहीत् ।
नमस्ते देहि मामस्मै नान्यं लोके पतिं वृणे ॥ २९

शुक्र उवाच ।

वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ।
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ॥ ३०

ययातिरुवाच ।

अधर्मो न स्पृशेदेवं महान्मामिह भार्गव ।
वर्णसंकरजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ॥ ३१

शुक्र उवाच ।

अधर्मात्त्वां विमुञ्चामि वरयस्व यथेप्सितम् ।
अस्मिन्विवाहे मा ग्लासीरहं पापं नुदामि ते ॥ ३२
वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।
अनया सह संप्रीतिमतुलां समवाप्स्यसि ॥ ३३
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ।
संपूज्या सततं राजन्मा चैनां शयने ह्वयेः ॥ ३४

वैशंपायन उवाच ।

एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
जगाम स्वपुरं हृष्टो अनुज्ञातो महात्मना ॥ ३५

C. 1. 3396
B. 1. 81. 38
K. 1. 75. 49

इति श्रीमहाभारते आदिपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

28 a) Ko.3.4 भार्गवं (for चागतं). K1 काव्यं; S विप्रं (for शुक्रं). — cd) K1 ववंदे प्रांजलिः शुक्रं ब्राह्मणं प्र°.

29 K1 D3 S om. उवाच. — b) Ñ B3.6 D (except Da D1) T G दुर्गमे. S (except M3.5) °मस्पृशत्. — After 29ab, D3.4 (marg.) S ins.:

786* नान्यपूर्वगृहीतं मे तेनाहमभया कृता ।

— c) B6 मामस्य. — d) Ñ B D transp. नान्यं and लोके.

30 K1 D3 S om. उवाच. — After शुक्रः, D3 S (T G3.6 M3.5 om. line 2) ins.:

787* अन्यो धर्मः प्रियस्त्वन्यो वृतस्ते नाहुषः पतिः ।
कचशापात्त्वया पूर्वं नान्यद्भवितुमर्हति ।

— ab) D3 S वृतो राजन्वृणीष्वेमां (G1 °ष्वैनां) महिषी नाहुषास्तु ते (D3 T2 G1-3.6 °षीं नहुषात्मज). — After 30ab, D3 S ins.:

788* स्वयंग्रहे महान्दोषो ब्राह्मण्यां वर्णसंकरात् ।

31 K1 D3 S om. उवाच. — a) B4 मा (for न). K1.2 Ñ Dn D4 °देव. — K2 om. from भार्गव up to वर (32b). — b) Ñ3 आत्मानमिह. Da D2 transp. महान् and मां. — c) T2 G6 °करतो. — d) K1 इह (for इति). S भयादेतद् (G4.5 M6-8 इति मत्वा) ब्रवीम्यहं.

32 K2 om. 32ab (cf. v. l. 31). K1 D3 S om. उवाच. — a) M3.5 विमोक्ष्यामि. — b) S (except M3.5) °य त्वं. K3 यमीप्सितं. Ko वरय स्वमभीप्सितं; K1 Ñ1.2 B D (except D5) वृणु त्वं (K1 यद्) वरमीप्सितं; Ñ3 वर यं वरमीप्सितं. — c) Ñ B6 Dn D1 ग्लासीः. S अ(T2 G4-6 M3.5 त)स्माद्विवाहा(T2 G2.3.6 °द्वि पापा)न्मा भैषीः. — d) M3 पुनामि ते. M6 अहं वाचं ददामि ते. Cd as in text.

33 b) T1 देवरूपं. K D5 शुचिस्मितां. — d) T2 G (except G1.3) त्वम् (for सम्-). K2.4 Ñ B D °वाप्नुहि.

34 For 34, S subst.:

789* इयं कुमारी शर्मिष्ठा दुहिता वृषपर्वणः ।
तां पूजयेथा मा चैनां शयने वै समाह्वय ।
रहस्येनां समाहूय न वदेर्न च संस्पृशेः ।
वहस्व भार्यां भद्रं ते यथाकाममवाप्स्यसि ।

35 K3 D3.5 om. उवाच. — After वैशं°, K3 ins.:

790* गान्धर्वेण विवाहेन देवयानी वृता तदा ।

— a) K3 एवं कृत्वा; S तथेत्युक्त्वा. — b) K3 कृत्वा काव्यं प्र°; D4 S तत्सर्वमकरोत्प्रभुः. — After 35ab, Ko.4 Dn D4.5 (both latter marg.) ins.:

791* शास्त्रोक्तविधिना राजन्विवाहमकरोच्छुभम् ।
लब्ध्वा शुक्रान्महद्वित्तं देवयानीं तथोत्तमाम् ।
द्विसहस्रेण कन्यानां तथा शर्मिष्ठया सह ।
संपूजितश्च शुक्रेण दैत्यैश्च नृपसत्तमः ।;

while, S ins.:

792* विवाहं विधिवत्कृत्वा प्रदक्षिणमथाकरोत् ।

With the posterior pāda of. 35b. — c) D1 (hapl.) om. from हृष्टो (in cd) up to स्वपुरं (1. 77. 1a). S ययातिः (G1-3 ययौ च) (for जगाम). K2.4 स्वं पुरं. T1 G4-6 M3.5 यायात्; T2 G1-3 राजा; M6-8 प्रायात् (for हृष्टः). — d) Ñ3 T G4-6 M अनुज्ञातो (as in text): K D3.5 सोनु°; Ñ1.2 B3.4.6 Dn [ऽ]नुज्ञातोथ; B1 Da D2.4

## ७७

: 1. 3397
: 1. 82. 1
: 1. 76. 1

वैशंपायन उवाच ।
ययातिः स्वपुरं प्राप्य महेन्द्रपुरसंनिभम् ।
प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् ॥ १
देवयान्याश्चानुमते तां सुतां वृषपर्वणः ।
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् ॥ २
वृतां दासीसहस्रेण शर्मिष्ठामासुरायणीम् ।
वासोभिरन्नपानैश्च संविभज्य सुसत्कृताम् ॥ ३
देवयान्या तु सहितः स नृपो नहुषात्मजः ।
विजहार बहूनब्दान्देववन्मुदितो भृशम् ॥ ४
ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना ।
लेभे गर्भं प्रथमतः कुमारं च व्यजायत ॥ ५
गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत् ॥ ६
ऋतुकालश्च संप्राप्तो न च मेऽस्ति पतिर्वृतः ।
किं प्राप्तं किं नु कर्तव्यं किं वा कृत्वा कृतं भवेत् ॥ ७
देवयानी प्रजातासौ वृथाहं प्राप्तयौवना ।

---

स्वनु°; B6 समा°; G1.2 ह्मनु°; G3 -व्यनु°. T1 महर्षिणा. — Only Ñ3 has the entire line 35^cd exactly as in text!

Colophon om. in D1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान. K1–3 Ñ3 B D (D1 om.) M (all om. sub-parvan name) mention only यायात. — *Adhy. name:* Ko.4 देवयानीविवाहः; M3.5 ययातिविवाहः. — *Adhy. no.* (figures, words or both): Ko 78; B6 D3 75; Da1 D4m 79; T2 16; G M 17. — *S'loka no.:* Ñ3 37; Da1 39; Dn 38; M3 56. — *Aggregate s'loka no.:* Dn2 3367.

☞ The fragm. MS. D3 ends with this adhy.; it is *wholly* ignored in the sequel. Accordingly D will hereafter denote only the *nine* Devanāgarī MSS.: Da (2), Dn (3), D1.2.4.5 (cf. the note at the beginning of adhy. 54).

## 77

☞ This adhy. is missing in Ś1 V1 (cf. v. l. 1. 68. 74; 72. 23). The MSS. are *wholly* ignored here.

1 K1 S om. उ° (G6 om. the ref.). — D1 om. up to स्वपुरं (cf. v. l. 1. 76. 35). — ^ab) S °पुरं गत्वा पताकाभिरलंकृतं. — ^c) T2 G6 °पुरे. T1 G4.5 M राजा (for तत्र).

2 K4 (hapl.) om. 2. — ^b) Ñ1.2 B D (except D5) transp. तां and सुतां. — ^c) Some MSS. °भ्यासे.

3 ^b) Ñ1.2 B D वार्षपर्वणीं; T2 G (except G1.2) असुरात्मजां. — ^d) K3 संभविष्यत्. Ko.3.4 सुपूजितां; K1 B3 Da D2 °संस्कृतां. K2 सा व्यतिष्ठत्सुसत्कृता.

4 ^a) K1 च; T1 स; G4.5 सु- (for तु). — ^b) S ययातिर्नहु°. — After 4^ab, K4 S ins.:

793* प्रीत्या परमया युक्तो मुमुदे शाश्वतीः समाः ।
अशोकवनिकाभ्याशे देवयानी समागता ।
शर्मिष्ठया सा क्रीडित्वा रमणीये मनोरमे ।
तत्रैव तां तु निर्दिश्य सह राज्ञा ययौ गृहम् ।
एवमेव बहुप्रीत्या मुमुदे बहुकालतः ।

— ^c) M (except M6) विचचार. Ko.3.4 वर्षान्; Ñ3 S (except M7) देशान्. — ^d) T G4–6 मुमुदे. Ñ1.2 B D (except D5) सुखी (for भृशम्).

5 ^b) S शुचिस्मिता (for वरा°). — ^c)=26^c. K (except K1) लेभे प्रथमतो गर्भं (K2 °तः पुत्रं). — ^d) G4–6 M3 कुमारश्च.

6 ^cd) K1 सा च व्यचिं°; K2 सा वाप्यचिं°. S सा तु काले ऋतुस्नाता भर्तारं सम(G4.5 M अनु)चिंत°. — After 6, S ins.:

794* शुद्धा स्नाता तु शर्मिष्ठा सर्वालंकारभूषिता ।
अशोकशाखामालम्ब्य सुफुल्लैः स्तबकैर्वृताम् ।
आदर्शे मुखमुद्वीक्ष्य भर्तृदर्शनलालसा ।
शोकमोहसमाविष्टा वचनं चेदमब्रवीत् ।
अशोक शोकापनुद शोकोपहतचेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियसंदर्शनाद्धि माम् ।
एवमुक्तवती सा तु शर्मिष्ठा पुनरब्रवीत् ।

7 ^a) G1.2 तु (for च). T2 G4–6 M मे (for सं-). — ^b) S न च भर्तास्ति कश्चन. — ^c) B1 किं कार्यं; M3.5 किं प्राप्यं. — ^d) K1 M3.5 किं नु. Ko हितं; G4.5 सुखं (for कृतं). K4 T2 G1–3.6 किं कृत्वा (G1–3 कृतं) नु(K4 हि)कृतं भ°.

यथा तया वृतो भर्ता तथैवाहं वृणोमि तम् ॥ ८
राज्ञा पुत्रफलं देयमिति मे निश्चिता मतिः ।
अपीदानीं स धर्मात्मा इयान्मे दर्शनं रहः ॥ ९
अथ निष्क्रम्य राजासौ तस्मिन्काले यदृच्छया ।
अशोकवनिकाभ्याशे शर्मिष्ठां प्राप्य विष्ठितः ॥ १०
तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी ।
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत् ॥ ११
सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा ।
तव वा नाहुष कुले कः स्त्रियं स्प्रष्टुमर्हति ॥ १२
रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा ।
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप ॥ १३

ययातिरुवाच ।

वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम् ।
रूपे च ते न पश्यामि सूच्यग्रमपि निन्दितम् ॥ १४
अब्रवीदुशना काव्यो देवयानीं यदावहम् ।
नेयमाह्वयितव्या ते शयने वार्षपर्वणी ॥ १५

शर्मिष्ठोवाच ।

न नर्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ १६
पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा

C. 1. 3418
B. 1. 82. 17
K. 1. 76. 25

---

8 a) Ko.2.3 प्रसूता. Ko.3.4 वै; K2 हि; S (except M7) सा (for -सौ). — b) T G4-6 यथा संप्राप्त°. — After $8^{ab}$, S ins.:

795* देवयानी पुण्यकृता तस्या भर्ता हि नाहुषः ।
[ G1-3 पुण्यतमा; M कृतपुण्या. ]

— cd) S यथा तस्या भवद्भर्ता (G1.2 transp. तस्या and भर्ता) ममाप्येष तथा भवेत्.

9 b) M (except M7) निश्चितं मनः. — d) S यायान्मे. T G पुनः (G3 पुरः); M नृपः (for रहः). — After 9, K4 (om. lines 2–3) D4 (marg.) S ins.:

796* केशे बद्ध्वा तु राजानं याचेऽहं सदृशं पतिम् ।
वैशंपायनः ।
गृहे मुदा देवयानीपुत्रमीक्ष्य पुनः पुनः ।
क्रीडन्नन्तःपुरे तस्याः कचिल्लक्षणमवाप सः ।

[ (L. 1) K4 केशैर् and याचेयं. — M om. वैशं°. — (L. 2) M स्पृहे मुदा देवयान्याः. — (L. 3) T2 G1.2.6 क्रीडत्यन्तः°, and सा. G3 क्रीडंत्याः पुनरेतस्याः. M3 reads line 3 after $10^{ab}$. ]

10 Before 10, K Ñ B (except B3) D (except Dn) ins. वैशं° उ°; M वैशं°. — a) T2 G6 राजर्षिः. G1.2.4.5 M स; G3 तु (for -सौ). — c) Some MSS. °काभ्यासे; G1-3 °कामध्ये. — d) Dn T2 G6 प्रेक्ष्य; G4.5 प्राप; M3 वीक्ष्य. K (except K1) B3 Dn D2.5 धिष्ठितः; T2 G6 तिष्ठति; G4.5 तिष्ठतीं. D1.4 शर्मिष्ठां प्राप्तयौवनां (D4m प्राप्तवान् शुभां); T1 G1-3 °ष्ठा यत्र तिष्ठति.

11 a) Ko.1 B5.6 Da D4 (*sup. lin.*) रहितं. Ñ2 रहसि प्रेक्ष्य. S दृष्ट्वा तमेकं रहसि. — b) $=26^{b}$. Da वार्षपर्वणी (for चारु°); cf. $6^{b}$. — c) K1.2 बध्वा (for कृत्वा).

12 Before 12, Ko.4 Dn D1.4 ins. शर्मिष्ठोवाच; S (except G3) ins. शर्मिष्ठा. — a) K D5 G2 च (for वा). — b) S (except T1) धनदस्य वा. Ko.3.4 Ñ1.2 Dn D1.4.5 G5.6 च (for वा). — c) Ñ2 B D (except D5) गृहे. — d) Ñ1 प्रष्टुम्; Ñ2 B D (except D5) द्रष्टुम्.

13 a) K1 च (for हि). — c) T2 G (except G1.3) त्वां याचे संप्रसाद्याहं. — d) G1.2.4.5 सुतं देहि. T2 G6 तं तु मे दातुमर्हसि.

14 K1 S om. उवाच. K2 om. 14–15. — a) Ko.3.4 Ñ3 (*sup. lin.* as in text) वेद; K1 वीद (sic). D5 दयितां (for वेद्मि त्वां). G5 रूपसं°. — b) Ñ3 (*sup. lin.* as in text) वेद; M वेद्मि (for दैत्य-). — K1 (hapl.) om. $14^{cd}$. — c) Ñ Dn D1 रूपं. K3 S रूपेण ते (T1 G1 रूपेणैव; G5 रूपेण वै). — d) Ñ3 M सूच्यग्रेणापि निं°; G4.5 °ग्रेणाप्यनिं°. — After 14, D4 (marg.) S ins.:

797* तदा प्रभृति त्वां दृष्ट्वा स्मराम्यनिशमुत्तमे ।

15 K2 om. 15 (cf. v. l. 14). — a) After अब्रवीत्, B1.4 ins. तु. K1.3 (*sup. lin.*) B1 Da2 T1 G6 M5 °शनाः. — b) G1 °यान्या; G2 °यानेः. D5 यदोद्वहं; T1 यथा वहे; T2 G2.6 सदा वह (G2 °हे); G1 यदुद्वहे; G3-5 M °वहे. — c) T2 G6 आह्वयनीया; G1 आश्वासितव्या. — d) S वा(T1 ना-; G3 चा)न्यथापि वा. — After 15, D4 (marg.) S ins.:

798* देवयान्याः प्रियं कृत्वा शर्मिष्ठामपि पोषय ।

16 K2 om. शर्मिष्ठो°. K1 S om. उवाच. — a) Ñ3 D4m S अनृतं (for वचनं). K1 निहंति. — c) M °धनातिपाते.

C. 1. 3418
B. 1. 82. 17
K. 1. 76. 25

वदन्ति मिथ्योपहितं नरेन्द्र ।<br>
एकार्थतायां तु समाहितायां<br>
मिथ्या वदन्तमनृतं हिनस्ति ॥ १७

यया‌तिरुवाच ।

राजा प्रमाणं भूतानां स नश्येत मृषा वदन् ।<br>
अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे ॥ १८

शर्मिष्ठोवाच ।

समावेतौ मतौ राजन्पतिः सख्याश्च यः पतिः ।<br>
समं विवाहमित्याहुः सख्या मेऽसि पतिर्वृतः ॥ १९

ययातिरुवाच ।

दातव्यं याचमानेभ्य इति मे व्रतमाहितम् ।<br>
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते॥२०

शर्मिष्ठोवाच ।

अधर्मात्त्राहि मां राजन्धर्मं च प्रतिपादय ।<br>
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ॥ २१<br>
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।<br>
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ २२<br>
देवयान्या भुजिष्यास्मि वश्या च तव भार्गवी ।<br>
सा चाहं च त्वया राजन्भरणीये भजस्व माम् ॥२३

वैशंपायन उवाच ।

एवमुक्तस्तु राजा स तथ्यमित्येव जज्ञिवान् ।<br>
पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् ॥ २४

---

17 b) N (except Ko.4 D5) G2 मिथ्या पतितं; G4.5 °थ्योपहतं; M °थ्योपचितं. T1 G6 मिथ्या तदर्थाचरितं न°; G3 मिथ्यात्थ वधाचरितं (sic) न°. — c) Ko.2.4 °कार्थिता°. K2.4 D5 S च (for तु). — d) Ñ B D (except Da D5) T2 G3 M5 °तं त्वनृतं; G1.2.4.6 °तं ह्यनृतं. K1 ह्यनृपं (sic) वदंति. — After 17, S ins.:

799* अनृतं नानृतं स्त्रीषु परिहासविवाहयोः ।<br>
आत्मप्राणार्थघातेषु तदेवोत्तमतां व्रजेत् ।

M cont.:

800* धर्मसूक्ष्मार्थतत्त्वज्ञा एवमाहुर्मनीषिणः ।

18 K1 S om. उवाच. After ययातिः, M ins.:

801* यथा वदसि कल्याणि ममाप्येतद्धि काङ्क्षितम् ।<br>
ब्राह्मणस्य तु तद्वाक्यं हृदि मे परिवर्तते ।

— a) Ko.3.4 °णं लोकानां. — b) T2 G4-6 वि- (for स). B4 स प्रणश्येन्मृषा. — c) T1 G1-3 अति° (for अर्थ°). B1 अभि-; D5 अनु- (for अपि). — d) D1 T2 G (except G1.3) मिथ्यां. Ñ3 T1 G5 M5 वक्तुम्.

19 K1 S om. उवाच. — a) S उभौ तौ हि (T2 G6 हि च) पती लोके. — b) M3.5 सख्युः. T2 G पतिश्च यः (by transp.). — d) D5 मे त्वं; M3.5 मे हि. Ñ1.2 B D (except D5) transp. पतिः and वृतः. T1 G1-3 स्मृतः (for वृतः). — After 19, S reads 22, which is followed by 805*.

20 K1 S om. उवाच. — a) Da °मानेषु. S दास्यामि याचतो (T G3-6 °चते; G1.2 °चितो) नित्यं. — c) K2 याचसे त्वं च (for त्वं च या°). K1 G2 M याचस्व. K1 मे (for मां). — After 20, S ins.:

802* धनं वा यदि वा कामं राज्यं वापि शुचिस्मिते ।

21 K1 S om. उवाच. — a) Ko.3.4 B5.6 D (except Da D2) पाहि (for त्राहि). — b) Cf. 24d. Ko.1.4 प्रति(Ko परि)पालय. — After 21ab, D4 (marg.) S ins.:

803* नान्यं वृणे पुत्रकामा पुत्रात्परतरं न च ।

After 21, S ins.:

804* पुत्रार्थं भर्तृपोषार्थं स्त्रियः सृष्टाः स्वयंभुवा ।<br>
अपतिश्चापि या कन्या अनपत्या च या भवेत् ।<br>
तस्या जन्म वृथा लोके गतिस्तस्या न विद्यते ।

22 =(var.) Manu 8. 416. — S reads 22 after 19 (cf. v. l. 19). — b) D1 T2 G6 transp. तथा and सुतः. — 22cd = Manu 8. 416cd. — d) Ñ1.2 B1 Dn D1.4 S यस्यैते. — After 22, D4 (marg.) S ins.:

805* सह दत्तास्मि काव्येन देवयान्या महर्षिणा ।<br>
पूज्या पोषयितव्येति न मृषा कर्तुमर्हसि ।<br>
सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ।<br>
याचतां हि ददासि त्वं गोग्रामादीनि यानि च ।<br>
बाहिरं दानमित्युक्तं न शरीराश्रयं नृप । [5]<br>
दुष्करं पुत्रदानं च आत्मदानं च दुष्करम् ।<br>
शरीरदानात्तत्सर्वं दत्तं भवति मारिष ।<br>
यस्य यस्य यथाकामं तस्य तस्य ददाम्यहम् ।<br>
इत्युक्त्वा नगरे राजंस्त्रिकालं घोषितं त्वया ।<br>
अनृतं त्वयोक्तं राजेन्द्र वृथा घोषितमेव च । [10]<br>
तत्सत्यं कुरु राजेन्द्र यथा वैश्रवणस्तथा ।

[(L. 1) G1.2 अहं; G3 साहं. — (L. 4) G याचितॄणां द°. — (L. 5) T G4-6 बाह्यकं. G3 त्वाभिराजानमित्युक्तं. — (L. 6) M पुष्कलं (for दुष्करं). G1-3 शरीरस्य तथैव च. — (L. 9) G1.2 तदा (for त्वया).]

समागम्य च शर्मिष्ठां यथाकाममवाप्य च ।
अन्योन्यमभिसंपूज्य जग्मतुस्तौ यथागतम् ॥ २५
तस्मिन्समागमे सुभ्रूः शर्मिष्ठा चारुहासिनी ।
लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात् ॥ २६
प्रजज्ञे च ततः काले राजन्राजीवलोचना ।
कुमारं देवगर्भाभं राजीवनिभलोचनम् ॥ २७

इति श्रीमहाभारते आदिपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## ७८

वैशंपायन उवाच ।
श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता ।
चिन्तयामास दुःखार्ता शर्मिष्ठां प्रति भारत ॥ १
अभिगम्य च शर्मिष्ठां देवयान्यब्रवीदिदम् ।

C. 1. 3425
B. 1. 83. 2
K. 1. 77. 5

23 $^{d}$) Ñ1.2 B D भजनीये (D5 भरणीयैर्). K2 M6-8 भरस्व.

24 K1 S om. उवाच. — $^{a}$) G2.3 °मुक्ते स. T1 G1-3 तु (for स). — $^{b}$) T1 G (except G3.6) सत्यं (for तथ्यं). Ñ1.2 B D (except D5) इत्यभि°. After $24^{ab}$, D4 (marg.) S ins.:

806* काव्यस्य देवयान्याश्च भीतो धर्मभयादपि ।

— $^{c}$) B1m M6-8 धार्मिष्ठां. — K1 (hapl.) om. $24^{d}$–$26^{a}$. — $^{d}$) Cf. $21^{b}$. S धर्मे. T G (except G4.5) M7 प्रतिपादयन्. For $24^{d}$, Ñ2 subst. $25^{b}$. — After 24, S (M om. line 3) ins.:

807* ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चैव संवृतः ।
कृत्वा विवाहं विधिवद्दत्वा ब्राह्मणदक्षिणाम् ।
पुण्ये नक्षत्रसंयोगे मुहूर्ते द्विजपूजिते ।

25 K1 om. 25 (cf. v. l. 24). — $^{a}$) Da D2 G4.5 M तु (for च). Ñ B Dn D1.4.5 स (D5 तां) समागम्य श°. — $^{b}$) T1 G1-3 यथाकालम्. — $^{c}$) Ñ B D °न्यं चाभि°; S °न्यं पूजयित्वा तु.

26 $^{a}$) K1 om. $26^{a}$ (cf. v. l. 24). — $^{b}$)=$11^{b}$. D5 वार्षपर्वणी (for चारु°). — $^{c}$)=$5^{c}$. — $^{d}$) D5 तु नृप°; S राजर्षि° (for नृपति°).

27 $^{b}$) S क्रियां (T2 G6 M8 °याः) कृत्वा विशेषतः. — $^{c}$) K2 देवरूपाभं. — $^{d}$) G4.5 °सम° (for °निभ°).

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान. K1.2.4 Ñ3 B Da Dn1.n2 D1.2.4.5 T2 G2.4 M6-8 (om. sub-parvan name) mention only ययात. — *Adhy. name:* Ko शर्मिष्ठासंप्रयोगः; K3.4 ययातिशर्मिष्ठासंयोगः (K4 °संगमः); T2 G2.4 शर्मिष्ठापरिणयं (T2 °णयनं). — *Adhy. no.* (figures, words or both): Ko 79; B6 76; Da1 D4m 80; Dn3 81; T1 67; T2 17; G M 18. — *S'loka no.:* Ñ3 Da1 Dn 27; M3 48. — *Aggregate s'loka no.:* Dn2 3395.

## 78

☞ This adhy. is missing in V1 (cf. v. l. 1. 68. 74); the MS. is *wholly* ignored here.

1 In Ś1, 1–$20^{ab}$ are missing (cf. v. l. 1. 72. 23). K1.3 D2.5 S om. उवाच. — After वैशं° (resp. its v. l.), K4 D4 S ins.:

808* तस्मिन्नक्षत्रसंयोगे शुक्ले पुण्यर्क्षगेन्दुना ।
स राजा मुमुदे सम्राट् तया शर्मिष्ठया सह ।
ययातिः ।
प्रजानां श्रीरिवाढ्या मे शर्मिष्ठा ह्यभवद्वधूः ।
पन्नगीवोग्ररूपा वै देवयानी ममाप्यभूत् ।
पर्जन्य इव सस्यानां देवानाममृतं यथा । [5]
तद्वन्ममापि संभूता शर्मिष्ठा वार्षपर्वणी ।
वैशंपायनः ।
इत्येवं मनसा ध्यात्वा देवयानीमवर्जयत् ।

[ (L. 1) M यस्मिन्. K4 D4 तस्मिंस्तु पुत्रे संजाते. T1 शुक्ले; M3.5 शुभे. T1 G1-3 चन्द्रस्तु यादृशः (for पुण्य°). — (L. 2) M °दे तस्याः. T1 G1-3 तादृशो नाहुषो राजा त°. M प्रियः (M3.5 प्रीतः) श°. T1 G1-3 °ष्ठयाभवत्. — (L. 3) K4 °वाद्यासौ; G4.5 °वाभ्याशे; M3.5 °वान्या मे. — (L. 7) G1.2 M3.5 अवंचयत्. ]

— $^{a}$) D1.5 °रं संजातं. Ñ1 तं; Ñ3 सा; M6-8 वै (for तु). — $^{c}$) S चिंतां बहुविधां चक्रे.

2 Ś1 missing. — $^{a}$) S (except G1.2) तु (for च). — $^{b}$) S °यानी तदा (T2 M6-8 °नीदम्; G3 °नी ततो)-

C. 1. 3425
B. 1. 83. 2
K. 1. 77. 5

किमिदं वृजिनं सुभ्रु कृतं ते कामलुब्धया ॥ २
शर्मिष्ठोवाच ।
ऋषिरभ्यागतः कश्चिद्धर्मात्मा वेदपारगः ।
स मया वरदः कामं याचितो धर्मसंहितम् ॥ ३
नाहमन्यायतः काममाचरामि शुचिस्मिते ।
तस्मादृषेर्ममापत्यमिति सत्यं ब्रवीमि ते ॥ ४
देवयान्युवाच ।
शोभनं भीरु सत्यं चेदथ स ज्ञायते द्विजः ।
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ॥ ५
शर्मिष्ठोवाच ।
ओजसा तेजसा चैव दीप्यमानं रविं यथा ।
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ॥ ६
देवयान्युवाच ।
यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम ।
अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात् ॥ ७
वैशंपायन उवाच ।
अन्योन्यमेवमुक्त्वा च संप्रहस्य च ते मिथः ।
जगाम भार्गवी वेश्म तथ्यमित्येव जज्ञुषी ॥ ८
ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥ ९
तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी ।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥ १०

---

ब्रवीत्. — Before 2[cd], B4 Dn D4 ins. देवयान्यु°; T2 G (except G1.3) देवयानी. — [c]) K0.3.4 किल्बिषं; K2 कुत्सितं (for वृजिनं). — [d]) Ñ B D वै (B5m as in text); T1 G (except G3.6) मे (for ते).

3 Ś1 missing. K1.3 S om. उवाच. — [a]) K (except K1) Ñ3 G4.5 °भ्यागमत्. — [b]) Ñ3 वेदवेदांगपा°. — [c]) T1 G1 मानदः. T2 G2.4.6 कामी. — [d]) T1 G (except G1.3) °संहितः. — After 3, S ins.:

809* अपत्यार्थे स तु मया वृतो वै चारुहासिनि ।

4 Ś1 missing. — [a]) T1 G1.3 °तः किंचिद्. — [b]) S (except M3.5) आचरेयं. — [d]) S इदं (for इति). S (except G5 M3.5) °त्यं शुचिस्मिते (cf. 4[b]).

5 Ś1 missing. K1 S om. उवाच. — [a]) Ñ1.2 B D (except D5) भीरु यद्येवं. — [b]) Ñ1.2 B1.3.5 Da D2 कथं (B1m अथ as in text). K1.2.4 Ñ1.2 B4 D1.5 T1 M7 सं-; T2 G वि- (G3 न) (for स). — [d]) K1 ज्ञातुमि°; Ñ3 (*sup. lin. sec. m.*) D5 श्रोतुमि°.

6 Ś1 missing. K1 S om. उवाच. — [a]) K0.3 G3 तेजसा; K1.2.4 Ñ (Ñ3 *sup. lin. sec. m.*) B6m Dn D1.4.5 तपसा (K2 *sup. lin.* प्रभया) (for ओज°). K0 तपसा; K3 यशसा. — [b]) D5 T1 G3 M °नो रविर्यथा. Ñ B Da Dn D1.2.4 transp. रविं and यथा. — [c]) B3 °ष्ट्वा तु मम प्र°. — [d]) Ñ3 नासीच्छक्तिः (by transp.).

7 Ś1 missing. K1 S om. उवाच (G5 om. the ref.). — [d]) T2 G4-6 श्रेष्ठं (for ज्येष्ठात्). S भामिनी (T2 G6 M6-8 °नि) (for वै द्वि°).

8 Ś1 missing. K1.3 D2.3 S om. उवाच. — [a]) S °मेवं (G3-5 °व) संभाष्य. Ñ B D (except Da) तु (for च). — [b]) Ñ3 संप्रधार्य. T2 G4-6 भृशं (for मिथः). — [d]) M3.5 °मेवेति. K2.3 D5 जानती; B5 Dn3 T G3-5 जग्मुषी. K0 तथ्यमेव विजानती; Ñ B3.4.6 Da Dn1.n2 D1.2.4 G2 °मित्यव(D1 °भि)जग्मुषी; B1m M6.7 °मित्यवज°.

9 Ś1 missing. — [a]) M3 द्वौ (for तु). — [b]) M6-8 पुत्रोपजननं. T G4-6 नृप; M3 प्रभुः. M5 द्वौ पुत्रौ जनयत्प्रभुः. — [c]) T1 G2.3 M तुर्वशुं. — [d]) T G M3.6-8 इंद्रा(T G6 M6.7 °द्र)विष्णू. M5 इंद्रं विष्णुमिवा°. — After 9, D4 S ins.:

810* तस्मिन्काले तु राजर्षिर्ययातिः पृथिवीपतिः ।
माध्वीकरससंयुक्तां मदिरां मदवर्धिनीम् ।
पाययामास शुक्रस्य तनयां रक्तपिञ्जराम् ।
पीत्वा पीत्वा च मदिरां देवयानी मुमोह सा ।
रुदती गायमाना सा नृत्यन्ती च मुहुर्मुहुः । [5]
बहु प्रलपती देवी राजानमिदमब्रवीत् ।
राजवद्रूपवेषौ ते किमर्थं त्वमिहागतः ।
केन कार्येण संप्राप्तो निर्जनं गहनं वनम् ।
द्विजश्रेष्ठ नृपश्रेष्ठो ययातिश्चोग्रदर्शनः ।
तस्मादितः पलायस्व हितमिच्छसि चेद्द्विज । [10]
इत्येवं प्रलपन्तीं तां देवयानीं तु नाहुषः ।
भर्त्सयामास वचनैरपापां पापवर्धिनीम् ।
ततो वर्षवरान्मूकान्पङ्गून्कुब्जान्सपण्डकान् ।
रक्षणे देवयान्याः स पोषणे च शशास तान् ।
ततस्तु नाहुषो राजा शर्मिष्ठां प्राप्य बुद्धिमान् । [15]
रेमे च सुचिरं कालं तया शर्मिष्ठया सह ।

[ (L. 2) T2 G4-6 तां च माध्वीकसं°. — (L. 4) T2 G4-6 °यानीममोहयत्. — (L. 5) T2 G3-6 रुदंती. — (L. 7) G1.3 °पवेषेण. — (L. 12) G3 अनर्हां (for अपापां). T2 G

ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता ।
ययातिसहिता राजन्निर्जगाम महावनम् ॥ ११
ददर्श च तदा तत्र कुमारान्देवरूपिणः ।
क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत् ॥ १२
कस्यैते दारका राजन्देवपुत्रोपमाः शुभाः ।
वर्चसा रूपतश्चैव सदृशा मे मतास्तव ॥ १३
एवं पृष्ट्वा तु राजानं कुमारान्पर्यपृच्छत ।

किंनामधेयगोत्रो वः पुत्रका ब्राह्मणः पिता ।
विब्रूत मे यथातथ्यं श्रोतुमिच्छामि तं ह्यहम् ॥ १४
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम् ।
शर्मिष्ठां मातरं चैव तस्याचख्युश्च दारकाः ॥ १५
इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः ।
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके ।
रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः ॥ १६

C. 1. 3440
B. 1. 83. 17
K. 1. 77. 32

---

(except G3) हर्ष° (for पाप°). — (L. 13) D4 सपंगुकान्; T2 G6 सपिंड°; G4.5 च पंड°. — (L. 15) T2 G4–6 तां (for तु). ]

10 Ś1 missing. M om. 10ab. T1 transp. 10ab and 10cd. — a) K1 ब्रुहं; K2–4 Da1 Dn1.n2 D1 G1.2 ब्रुह्मं (cf. v. l. 1. 70. 32, 34). K0 त्रीन् (for the last च). K0 D1 om. 10d–12a. — After 10, T2 G2.4–6 (T2 G6 om. line 2) ins.:

811* शर्मिष्ठाकामुको राजा यदासीत्तद्गताकुलः ।
मदिराविवशां कृत्वा रेमे शर्मिष्ठयान्वहम् ।
[ After line 1, G6 repeats 10ab. ]

11 Ś1 missing. K0 D1 om. 11 (cf. v. l. 10). — b) = 1b. S °नी वरांगना. — c) S °ता देवी. — d) Ñ B Da Dn D2.4 जगाम रहितं (B3.5.6m D2 गहनं) वनं; D5 °म हि तद्वनं; S जगाम प्रमदावनं.

12 Ś1 missing. K0 D1 om. 12a (cf. v. l. 10). — a) S सा ददर्श वने तत्र. — b) G1–3 देववर्चसः. — c) K4 D1 तु (for सु-). D1 T1 M विस्रब्धान्.

13 Ś1 missing. Before 13, Dn D1.4 ins. देवयान्यु°; G1.2 M3.5 देवयानी. — a) K Ñ1.3 D5 कस्येमे. Ñ2 Da °का देव. — c) D2 °सा धर्मतश्च; T2 G4–6 °सा तेजसा. — d) Ñ3 °शास्ते मता मम; D1 °शास्तव मे मताः.

14 Ś1 missing. Before 14, Dn D1.4 ins. वैशं° उ°; D5 वैशं°. — a) K0.3.4 उक्त्वा (for पृष्ट्वा). — After 14a, G1.2 ins.:

812* पश्यन्तमवनीतलम् ।
ज्ञात्वा तु तत्कृतं शापं.

— b) T2 G4–6 °रान्प्राप्य पृच्छति. — S ins. after 14ab: D4, after 14:

813* तस्मिन्काले तु तच्छ्रुत्वा धात्री तेषां वचोऽब्रवीत् ।
किं न ब्रूत कुमारा वः पितरं वै द्विजर्षभम् ।
[ (L. 1) T1 G1–3 °ले ततः (G3 तु तं) श्रु°. ]

Before 14cd, Dn ins. देवयान्यु°; S (except G5 M5) देवयानी. — c) K0.1.3.4 D2 °धेयं गोत्रं; B5 D5 G2.3.6 °धेयं (B5 G3 °या) गो°; Dn D1.4 °धेयं (D1.4 °यो) वंशो; T1 °गोत्रं; G1 °नामगोत्रः स च. K1.2 वा; K4 च; Da यः; T1 वै (for वः). — d) K2 transp. पु° and ब्रा°. K0.1.3.4 D (except Da; D5 marg.) कश्च वः (for ब्रा°). — After 14cd, T G ins.:

814* प्रब्रूत तत्त्वतः क्षिप्रं कश्चासौ क्व च वर्तते ।
[ T1 G1.2 प्रब्रूत तं तु नः; G3 प्रभूततन्मनः. ]

— e) Ñ3 B (except B1) D (except Da) T1 G (except G6) प्रब्रूत. T2 G (except G1.3) °तत्त्वं. — f) B6 ज्ञातुं. K0.3.4 °मि तत्त्वतः; D1.2 °मि तद्ध्यहं; M6–8 °म्यहं हि तं (by transp.). — S ins. after 14: D4, after 813*:

815* एवमुक्ताः कुमारास्ते देवयान्या सुमध्यया ।

After 14, D4 ins. 813*.

15 Ś1 missing. — a) M6–8 व्यदर्शयन्. — b) S °व पितरं (G3 °वापतितं) नृपं. — d) K1 T2 G2–5 तदाच°; K3 तस्यश्चेख्यु (sic); K3 तस्याचक्षुश्च; K4 तस्याः सख्याश्च; Ñ B Da2 Dn D2.4 T1 तथाच°; Da1 तथाचक्षुश्च; D1 तथैवाचक्षु; D5 corrupt; G6 तस्या आचख्युः; M तस्या ऊचुश्च. G1 भारत (*sup. lin.* as in text); G3 पुत्रकाः. — After 15, S (G3 M om. line 3) ins.:

816* ऋषिश्च ब्राह्मणश्चैव द्विजातिश्चैव नः पिता ।
शर्मिष्ठा नानृतं ब्रूयाद्देवयानि क्षमस्व वै ।
तया रहः पृच्छयमानास्तथ्यमूचुश्च दारकाः ।
[ (L. 2) T2 G3–5 देवयानी. G1.3 M6–8 नः (for वै). ]

16 Ś1 missing. Before 16, K0.2.4 Ñ B D (except D2) ins. वैशं° उ°; K1.3 T G वैशं°. — a) G2.5.6 इत्युक्ताः स°. B3 °ता ह्येते; T G (except G1.3) °ता देव्या; M °ता देवीं. — d) K1 ततोंतिके; K2 Dn G1–3 तदं°; T1 G4.5 तथां°. — T1 om. 16ef. — e) Da G1 च; T2 G2.4–6 तु (for ऽथ). — f) Da अन्वयुः. K D2.5 G2.5 दारकास्. K4 D5 T2 G (except G3) तदा (G5 °था). — After 16,

C. 1. 3441
B. 1. 83. 18
K. 1. 77. 34

दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ।
बुद्ध्वा च तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् ॥ १७
मदधीना सती कस्मादकार्षीर्विप्रियं मम ।
तमेवासुरधर्मं त्वमास्थिता न बिभेषि किम् ॥ १८

शर्मिष्ठोवाच ।

यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ १९
यदा त्वया वृतो राजा वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ २०
पूज्यासि मम मान्या च ज्येष्ठा श्रेष्ठा च ब्राह्मणी ।
त्वत्तोऽपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् ॥ २१

वैशंपायन उवाच ।

श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ॥ २२
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम् ।
त्वरितं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा ॥ २३

---

Dn ins. the first line of 818*. — After 16, D4 S (T2 G for the first time) read $25^{ab}$; then ins.:

817* नातिदूराच्च राजानमवातिष्ठदवाङ्मुखी ।

[ D4 M °जानं शर्मिष्ठा समतिष्ठत; G6 °नमतितिष्ठ°. ]

17 Ś1 missing. — a) K (except K2) च (for तु). — c) G5 दृष्ट्वा; G6 लब्ध्वा. B5 S (except M6–8) तु (for च). Dn D4 च तत्त्वं सा; D1 तत्त्वं च सा. — After 17, S (except M3) ins.:

818* श्रुत्वा तु तेषां बालानां सव्रीड इव पार्थिवः ।
प्रतिवक्तुमशक्तोऽभूत्तूष्णींभूतोऽभवन्नृपः ।
गृहीत्वा तु करे रोषाच्छर्मिष्ठां पुनरब्रवीत् ।

— K0.4 Ñ (om. lines 1, 3) B5 (om. lines 1, 3) Dn3 D1 (om. lines 2, 3).4 M3 ins. after 17: Da (om. line 3), after 18: T G M5–8, after 818*:

819* देवयान्युवाच ।
अभ्यागच्छति मां कश्चिदृषिरित्येवमब्रवीत् ।
ययातिमेव नूनं त्वं प्रोत्साहयसि भामिनि ।
पूर्वमेव मया प्रोक्तं त्वया तु वृजिनं कृतम् ।

[ K0.4 Ñ B5 Da om. देवयान्यु°; S om. उवाच. — (L. 1) K0.4 Dn3 M अन्यो ग°. G3 °षिरत्य वचोऽब्र°. Dn3 T2 G4–6 M6–8 °ब्रवीः. Da D1 ऋषिरभ्यागतः (D1 आजगाम ऋषिः) कश्चिदिति मां पूर्वम°. — (L. 2) Ñ B5 Da Dn3 °व नृपतिं; D4 M3 °व राजानं. Ñ तं प्रोत्साहय का°; D2 यमाह्वयसि भा°. ]

18 Ś1 missing. Before 18, K3 D5 ins. देवयान्यु°. — a) S मय्यधीना. Ñ1.3 सखी. T1 G1 कन्या. — b) T2 G2–6 M transp. विप्रियं and मम. K2 D5 अप्रियं. K2 वद् (*sup. lin.* मम as in text). T1 G1 यत्कार्षीन्म(G1 °र्म)माप्रियं. — c) T G (except G3) तद् (for तम्). B4 Da1 D1.5 °धर्मत्वं; T2 G (except G3) °कर्म (G1.2 °र्मे) त्वं. M3.5 तु (for त्वम्). — d) S चरंती (for आस्थिता). M6–8 बिभेषि. Ñ B D मे; S मां (for किम्). — After 18, Da ins. 819*.

19 Ś1 missing. K1 S om. उवाच. — b) T1 शर्मिष्ठा (for तत्सत्यं). M5 चारुलोचने. M3 प्रोक्तं सत्यं शुचिस्मिते.

20 Ś1 resumes with भर्ता हि inc (cf. v. l. 1. 72. 23). — a) T2 G3 यथा. Dn3 S वृतस्त्व(Dn3 °तो त्व)या (by transp.). K1 Ñ2.3 B D भर्ता (for राजा). — b) K4 transp. तदा and मया. S तदै(T1 G3 °थै; G1.2.5 °दे)व स (T2 G2.4–6 हि) मया वृतः. — c) Ś1 K1 स-; K2 च (for हि).

21 Ś1 partly damaged. — a) K3 हि; D2 S च (for असि). — b) G2 साध्वी (for श्रे°). K1 Da1 T1 भामिनी (K1 °नि; T1 *sup. lin.* as in text); Ñ1.2 B Da2 D1 भाविनि (D1 °नी); D2 भार्गवी. — c) K2 D5 T1 G हि (for ऽपि). K2 S (except G3 M3.5.8) पूज्यतरो; Ñ3 पूर्वतमो. — d) B3 M3.8 नु (for न). K2–4 Da1 वेत्सि. G2.4.5 किं न भामिनी. K0.1 M3 तं (for तत्). Ś1 °र्षिर्वेत्थ किं न तं. — After 21, D4 S ins.:

820* तव पित्रा मे गुरुणा सहदत्ते उभे शुभे ।
ततो भर्ता च पूज्यश्च पोष्यां पोषयतीह माम् ।

[ (L. 1) D4 M5 त्वत्पित्रा मम गुरुणा (M5 गुरुणा मे च). — (L. 2) T2 G6 तव भ°. T1 G2.4.5 हि भर्ता (for भर्ता च). G1.3 हि पूज्यो भर्ता च (for भर्ता च पू°). ]

22 Ś1 K0.1.3 D2.5 S om. उवाच. — Ś1 partly damaged. — a) D5 श्रुत्वा तु तस्यास्तद्; S (except T1 G3) एवं (M एतत्) श्रुत्वा ततो. — After $21^{ab}$, D4 ins. 821*. — d) Ñ3 D2 M3.5 transp. कृतं and त्वया. — S ins. after 22: D4, after $22^{ab}$:

821* रमस्वेह यथाकामं देव्या शर्मिष्ठया सह ।
प्रतिजज्वाल कोपेन देवयानी तदा भृशम् ।
निर्दहन्तीव सव्रीडां शर्मिष्ठां समुदीक्ष्य च ।
अपविध्य च सर्वाणि भूषणान्यसितेक्षणा ।

[ (L. 3) G2.4–6 देवयानी च (for निर्द°). ]

अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः ।
न्यवर्तत न चैव स्म क्रोधसंरक्तलोचना ॥ २४
अविब्रुवन्ती किंचित्तु राजानं चारुलोचना ।
अचिरादिव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ २५
सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता ।
अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ २६

देवयान्युवाच ।

अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयातिवृत्तास्मि दुहित्रा वृषपर्वणः ॥ २७
त्रयोऽस्यां जनिताः पुत्रा राज्ञानेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ २८
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ २९

शुक्र उवाच ।

धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ ३०

ययातिरुवाच ।

ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ ३१
ऋतुं वै याचमानाया न ददाति पुमान्वृतः ।
भ्रूणहेत्युच्यते ब्रह्मन्स इह ब्रह्मवादिभिः ॥ ३२
अभिकामां स्त्रियं यस्तु गम्यां रहसि याचितः ।
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ॥ ३३
इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।

C. 1. 3458
B. 1. 83. 35
K. 1. 77. 57

23 M6–8 om. 23$^{ab}$. Ś1 partly damaged. — $^{a}$) T G (except G1.3) °तां राजा; M3 °तं नागं; M5 °तं सर्वं. — $^{b}$) B1.6 D2 ताम्रलो°. T G (except G1.3) M3.5 दृष्ट्वैव सहसोत्थितः. — $^{c}$) Hypermetric! Ko.1 शीघ्रं; K3.4 Ñ3 B3–5 Da2 त्वरितां; Ñ2 द्रुतं; Da1 M त्वरिता; T2 G4–6 त्वरया. K2 पितुः सकाशं त्वरितं; G2 त्वरया काव्यसंकाशं. — $^{d}$) G1 सदृशां (for व्यथितस्). Dn2 T1 G3 °थितां तदा (G3 °था); T2 G2.4–6 °थितान्ननां. M प्रस्थिता कमलेक्षणा (M3.5 °लानना).

24 Ś1 partly damaged. — $^{c}$) T1 G1.6 न ह्या(G6 प्रा)वर्तत; T2 G2–5 M न न्यवर्तत (by transp.). T1 G2.4.5 M वै तस्मात् (M3 *inf. lin.* कोपात्); T2 G6 चैवं सा; G1.3 चैवास्मिन् (G3 °श).

25 D4 S read 25$^{ab}$ after 16 (T2 G repeat 25$^{ab}$ here; cf. v. l. 16). B5 Da2 (hapl.) om. 25$^{ab}$. — $^{a}$) T1 तमब्रु°; M6–8 अपि ब्रु°. Ñ1.2 Da1 Dn सा; Ñ3 S च (for तु). — $^{b}$) Ko.3.4 D1 °हासिनी; Ñ2 B1.3.4 D2 वामलो°; Da1 Dn D4 साश्रुलो°; T2 G (except G1) °दर्शना. — $^{c}$) Ko.3.4 Ñ B3.6 D (except D5) °रादेव; B5 °रेणेव.

26 $^{b}$) S (except T1 G1.3) अभिवाद्येदमब्रवीत्. — $^{c}$) Ñ3 B4–6 Da D2 T G च (for तु).

27 Ś1 K1 D5 S om. उवाच. — $^{c}$) Ñ1 D4.5 °या निवृत्ता°; G3 °या यदुक्ता°.

28 $^{b}$) K4 G (except G1.3) °ज्ञा तेन. — $^{c}$) Ś1 K Ñ3 D5 °गायां (K4 Ñ3 °या) मयि. — $^{d}$) M3.5 जनितौ पुत्रकौ नृपात्; M6–8 पुत्रावजनयन्नृपः.

29 $^{a}$) T2 G (except G1.3) धार्मिष्ठ इ°; M5 सधर्म इ°. — $^{b}$) K2 कुलो°; D4 G6 कुरूद्वहः.

30 S om. उवाच; K1 G5 om. शुक्र उ°. — $^{a}$) T1 G (except G6) धार्मिकः. Ś1 M5 च; G1 त्वं (for सन्). — $^{b}$) S यो धर्मं ना(G1 चा; G2.3 न)कृथाः. Ko.3.4 Ñ3 B4.5 Da1 D2 S स्वयं. — $^{c}$) K2 Ñ3 T G (except G4) M3 नचिराद्.

31 Ś1 K1 S om. उवाच (G5 om. the ref.). Ś1 K1 (hapl.) om. 31. — $^{d}$) Some MSS. धर्मम्.

32 $^{a}$) Ko.3 Ñ3 D5 यो (for वै). — $^{b}$) K3 Ñ3 B D (except D5) ऋतुं (for वृतः). — $^{d}$) S सदा (T1 G1.3 तथा) वै (for स इह).

33 $^{a}$) B5 D2 अतिकामां; T1 अभिगम्यां. Ko.3.4 B D (except D2.5) °यं यश्च; S °यं चैव (T1 यो वै). — $^{c}$) S उपैति यः स्व- (T1 G1.2 च स; G3–5 M3.5 यः स). Ko.3.4 B D2.5 M (except M5) धर्मेण. — $^{d}$) S किल्बिषी न च सः (T1 G1.2 यः; M7 सत्-) पुमान्. — After 33, D4 (om. line 3) S (except T2) ins.:

822* यद्यद्याचति मां कश्चित्तत्तद्देयमिति व्रतम् ।
त्वयापि सा च दत्ता मे नान्यं नाथमिहेच्छति ।
मत्वैतन्मम धर्मं तु कृतं ब्रह्मन्क्षमस्व माम् ।

[ (L. 1) D4 वृणोति (for याचति). G2.4.5 m °ति कामं च. T1 G1.3 M6–8 तद्ददामीति मे व्र°. — (L. 3) M3.6–8 °तदिह. T1 G1–3.5.6 M5 धर्मेति. ]

34 $^{d}$) Ś1 Da D5 °ह्यामभि-.

C. 1. 3458
B. 1. 83. 35
K. 1. 77. 57

अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ॥ ३४

शुक्र उवाच ।

नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव ।
मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ॥ ३५

वैशंपायन उवाच ।

क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ ३६

ययातिरुवाच ।

अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मञ्जरेयं मा विशेत माम् ॥ ३७

शुक्र उवाच ।

नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप ।
जरां त्वेतां त्वमन्यस्मै संक्रामय यदीच्छसि ॥ ३८

ययातिरुवाच ।

राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा ।
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ॥ ३९

शुक्र उवाच ।

संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥ ४०
वयो दास्यति ते पुत्रो यः स राजा भविष्यति ।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ४१

इति श्रीमहाभारते आदिपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

35 Ś1 K1 S om. उवाच. — In Ś1 the first five letters are lost on a missing portion. — [a]) K3.4 D4 G (except G1.3) न त्वहं; Da1 न त्वत्वं (sic); T1 तत्वहं. Ś1 °वीक्ष्यसे; M प्रतिवक्ष्य(M3.5 °वाच्य)स्ते. — [b]) Ñ3 S मय्यधी°. — [c]) M3.5 °थ्या चरसि. — [d]) S जरा (for चौर्यं).

36 Ś1 K1.3 D5 S om. उवाच (T2 G4–6 om. the ref.). — [b]) Ñ3 D5 G3 °तिर्नहुषात्मजः.

37 Ś1 K1 S om. उवाच. D2 lacuna for the ref. In Ś1 this st. is lost on a missing portion. — [a]) Ñ3 अतृप्तयौवनश्चाहं. — [b]) K0.4 Da1 Dn3 G3 M3.5 देवयान्या. — [c]) Ñ3 °ह ब्रह्मर्षे. — [d]) G3 न शापः (for जरे°). K0.1.3.4 B3 नाविशेत (B3 °श्च); Ñ B1.4–6 D (except D2.5) T1 G1.2 न विशेत (Ñ1 Dn D1.4 °श्च); G3 प्रवि°. K2 °यं नाविशेद्यथा.

38 Ś1 K1 S om. उवाच. D2 lacuna for the ref. In Ś1, the portion of the text from 38 up to 1. 79. 7[a] is lost on the missing upper half of a fol. (61). — [a]) K2 Da1 वृथा (for मृषा). K2 °म्येत्य; D4 G3–5 °म्येव; T2 G6 M3.5 °म्येनां; G1.2 °म्येह; M6–8 प्रब्रवीमि (for ब्रवीम्येतत्). — [c]) K (except K1; K2 *sup. lin.*) एतां (K3 °नां); M इमां (for त्वेतां). K2 त्वमप्यन्यं; Ñ B2.5.6 Dn D1.4.5 त्वमन्यस्मिन्. T G (except G6) °रां त्वमेताम°.

39 Ś1 missing (cf. v. l. 38). K1 S om. उवाच. D2 lacuna for the ref. — [b]) T2 G6 transp. पुण्य° and कीर्ति°. — [d]) M6–8 तं (for तद्).

40 Ś1 missing (cf. v. l. 38). K1 S om. उवाच. D2 lacuna for the ref. — After शुक्र उ°, K0.4 D2.5 ins.:

823* पुत्रो ज्येष्ठः कनिष्ठो वा यो ददाति वयस्तव ।
[ K4 D2 °ति भयाद्वयः ].

Thereafter D5 ins. (for the first time) 824* (cf. v. l. 1. 79. 8).

41 Ś1 missing (cf. v. l. 38). — [ab]) T1 G1 transp. ते and यः. G3 स च (for यः स).

Colophon. Ś1 missing. — *Major parvan:* G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव; to it Ñ1.2 add ययात्युपाख्यान. K1.2 B D M3.5 (om. the sub-parvan name) mention only यायात. — *Adhy. name:* K0.3.4 ययातिशापः. T2 G4 ययातिशापावाप्तिः; G1 ययातिशापमोक्षः. — *Adhy. no.* (figures, words or both): K0 80; B5 77; Da1 D4m 81; Dn3 82; T1 68; T2 18; G M 19. — *S'loka no.:* Ñ3 Da1 43; Dn 42; M3 62. — *Aggregate s'loka no.:* Dn2 3437.

## 79

☞ This adhy. is missing in V1 (cf. v. l. 1. 68. 74); the MS. is *wholly* ignored here.

1 In Ś1, 1–9[a] is missing (cf. v. l. 1. 78. 38). K0.1 D5 S om. उवाच. — [b]) Ñ2 B1 D (except D2.5) S (except M6–8) हि (for ह). — [c]) K3 ज्येष्ठं पुत्रं (by transp.). T1 G1–3 परित्यज्य (for वरिष्ठं च).

## ७९

वैशंपायन उवाच ।

जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव ह ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ १
जरा वली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ २
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ३
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ४

यदुरुवाच ।

सितश्मश्रुशिरा दीनो जरया शिथिलीकृतः ।
वलीसंततगात्रश्च दुर्दर्शो दुर्बलः कृशः ॥ ५
अशक्तः कार्यकरणे परिभूतः स यौवनैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये ॥ ६

ययातिरुवाच ।

यस्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मादराज्यभाक्तात प्रजा ते वै भविष्यति ॥ ७
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।

C. 1. 3475
B. 1. 84. 10
K. 1. 78. 10

---

2 Ś1 missing (cf. v. l. 1). Before 2, K3 B1 D (except D2.5) ins. ययातिरु°; G3 ययातिः. — $2^{ab}$ = (var.) $24^{cd}$. — $^{a}$) K2 D1.5 S मे (G3 मा; G5 ते) (for मां). — $^{d}$) Da नैव तृ°.

3–4 Ś1 missing (cf. v. l. 1). K1 G2 om. $3^{c}$–$4^{d}$. D1 transp. $3^{cd}$ and $4^{ab}$. Cf. 8–9, 16, 20 and 26. — $4^{a}$) Ñ3 पूर्णे सहस्रे वर्षाणां. — $^{b}$) K2 Ñ1.2 D2 पुनर्दास्यामि यौवनं. — $^{c}$) K0.3 B5.6 Da1 Dn1 D2 T1 सं- (for स्वं). M °पत्स्येहं.

5 Ś1 missing (cf. v. l. 1). K1 S om. उवाच. — After यदुरु°, K3 (om. line 2).4 Ñ B D ins. (D5 repeats; cf. v. l. 1. 78. 40):

824* जरायां बहवो दोषाः पानभोजनकारिताः ।
तस्मान्न ग्रहीष्ये राजन्निति मे रोचते मनः ।

[ (L. 1) K3 °वर्जनाः; K4 Ñ1 °वार्जिताः; D5 °वर्धनाः. — (L. 2) Ñ1 B1 Dn D4.5 तस्माज्जरां न ते (D4 नाद्य) राजन् (B1 D5 °रां न ग्रहीष्ये); Ñ3 तां न ग्रहीष्ये राजेंद्र; B5 तस्माद्ग्रहीष्ये न जरां (m as in B1 D5); D1 तस्मान्न च रोचते राजन्; D2 ततो न गृह्णामि वै राजन्. K4 जरां (for राजन्). Dn D1.4 ग्रहीष्य इति मे मतिः (D1.4 °नः). K4 निश्चिता मतिः (for रोचते मनः). ]

— $^{a}$) K0.1 °श्रुः शि(K1 सि)रा लीनो; K2.4 D5 °शिरा क्षीनो; K3 T1 G1.2 °श्रुजरादी(K3 °ली)नो; Ñ1.2 B1.3–5 °श्रुधरो (B3m °शिरा as in text) दीनो; Dn D1.4 °श्रुर्निरानंदो. — $^{b}$) T1 G3 शिथिलाकृतिः. — $^{c}$) K (except K0) D5 G1.3 °संनत°; Ñ1 °संपन्न°; Ñ2 Da Dn D1.4 °संगत°; T1 °संतान°; G2 M5 पलिसंतत°. Ñ1.2 B3 D (except D2) तु (for च). — $^{d}$) Da1 D1 G4.5 M5.8 दुर्दशो. K0 Dn3 T2 G (except G3) कृतः.

6 Ś1 missing (cf. v. l. 1). — $^{a}$) Ñ3 कामकरणे. — $^{b}$) D4 S च (D4 G3 स्व-; G1 सु-; M3 *inf. lin.* स as in text). K4 D5 यौवने; Ñ B6 Dn2 D4 °तैः. — $^{c}$) Ñ3 तात (for चैव). — After $6^{c}$, G1.2 ins.:

825* भार्यापुत्रसुहृज्जनैः ।
सुरूपनाशिनीं घोरां.

— $^{d}$) K तज्जरां. S नैव का°. Ñ3 तज्जराहं न का°. — After 6, K3.4 D ins.:

826* सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ।
जरां ग्रहीतुं धर्मज्ञ तस्मादन्यं वृणीष्व वै ।

7 Ś1 missing (cf. v. l. 1). K1.3 S om. उवाच. Da lacuna for the ref. Cf. 11, 18 and 22. — $^{a}$) K0.4 यस्त्वं मे; K1 यन्मे त्वं; S यो मे त्वं. Ś1 resumes with $7^{b}$ (cf. v. l. 1. 78. 38). — $^{b}$) T1 G1.3 यौवनं (for वयः स्वं). — $^{c}$) B D2 °स्मान्न रा°. T1 °भुक् (for °भाक्). — $^{d}$) Ś1 missing. K2 Ñ1.3 D5 S वै ते (by transp.); Ñ2 Da Dn D1.4 तव; B6 चैव. — After 7, D4 S ins. (with वैशं° prefixed in G6 M3.5):

827* प्रत्याख्यातस्तु राजा स तुर्वसुं प्रत्यभाषत ।
[ D4 T1 G1.3 M3.5 °सुं प्रत्युवाच ह. ]

8 Before 8, B1.6 D4 ins. ययातिरु°; G6 ययातिः.

C. 1. 3475
B. 1. 84. 10
K. 1. 78. 10

यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ ८
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ ९
तुर्वसुरुवाच ।
न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं बुद्धिप्राणविनाशिनीम् ॥ १०
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ॥ ११
संकीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि ॥ १२
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
पशुधर्मिषु पापेषु म्लेच्छेषु प्रभविष्यसि ॥ १३
वैशंपायन उवाच ।
एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥ १४
द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥ १५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ॥ १६

---

Cf. 3 and 20. — $^{a}$) Ś1 missing. A few MSS. तुर्वशो. — G1 om. $8^{e}$–$9^{d}$. For $8^{cd}$, T1 subst. $3^{cd}$.

9 Ś1 missing up to पुनः (in $^{b}$). G1 om. 9 (cf. v. l. 8). Cf. 4, 16 and 26. — $^{a}$) K1 Ñ3 ते (for तु). — $^{b}$) K1 Ñ T2 G (G1 om.) M प्रति- (for पुनर्). T1 पुनस्ते यौवनं त्वहं. — $^{c}$) Ñ3 B D2 T1 दत्वा स्वं (T1 सं-) प्र°.

10 K1 S read तुर्वशुः (T1 G1 °सुः) and om. उवाच; D2 has lacuna for the ref. — $^{ab}$) Ñ3 न जरां कारये तात. K0 B1.6 Da2 T1 M3.5.8 °प्रणाशनीं. B1.5.6 D2 नाहं (B6 राजन्) जरामिमां तात (B6 नाभि-) कामये भोगनाशिनीं. — $^{c}$) B4 °भोगांत°; G1.4 M6–8 °करिणीं. — $^{d}$) Ñ1.2 B3 D (except D1.2.5) G3 °प्रणाशि(Da2 °श)नीं; Ñ3 B1.6 T1 M3.5 °शनीं; G2.4.5 अर्थं°; M6–8 देह°.

11 Ś1 K1 S om. उवाच. — D2 lacuna for the ref. Cf. 7, 18 and 22. — $^{a}$) Ś1 K1 यन्मे त्वं; K0.4 यस्त्वं मे; S यो मे त्वं. K3 औरसः पुत्रः. — $^{b}$) T1 यौवनं. G1–3 त्वं (for स्वं). — After $11^{ab}$, D4 S ins.:

828* तुर्वशो त्वं प्रियं कामं नैतत्संपरस्यते क्वचित् ।

[ Cf. $18^{cd}$. — G1.2.6 संपत्स्य(G1 °द्य)से. D4 M5 नैव संपत्स्य(M5 °द्य)ते तव. M6–8 नैव संप्रतिपत्स्यते. ]

— After the above line, T1 G1.2.4.5 M3.6–8 read 19, T2 G6 $19^{cd}$ (only). — Ś1 T G om. $11^{cd}$; M (except M5) om. $11^{cd}$–13. — $^{d}$) M5 तव यास्यामि दुर्मते.

12 K2 M (except M5) om. 12 (cf. v. l. 11). — $^{a}$) T G M5 संकीर्णव्यति(G3.4 °र्णाप्रति)की(G3 °ती)र्णेषु. — $^{b}$) B4 °मरतेषु. — $^{c}$) Ś1 K1 चान्येषु; K4 Dn3 चांते°; B1.3m.4.5 D2 मूढे°. D5 पिशितादप्रधानेषु; T G M5 म्लेच्छेषु पिशिताशेषु. — $^{d}$) D4 T2 G1.6 मूढो (G1 क्रुद्धो) राजा; T1 मूढराजो. M5 निर्मर्यादेषु नित्यदा.

13 M (except M5) om. 13 (cf. v. l. 11). — $^{c}$) K0.4 Ñ B1.5 Dn D2.4.5 °धर्मेषु. T1 G1.2.4.5 M5 पशुधर्मेष्व(G1 °र्मे स्व-; M5 °र्मस)धर्मेषु; T2 G6 छद्म(G6 छिद्र)धर्मस्वरूपेषु; G3 °धर्मस्वधर्मस्थो. — $^{d}$) K2 Ñ1 D5 प्रसवि°. T G व्याधे(G3 ग्राल्ये)षु जनयि(T1 च जनि)ष्यसि; M5 मृगेषु प्रजनिष्यसे. — After 13, M5 reads 19.

14 Ś1 K1.3 D5 S om. उवाच (M6–8 om. the ref.). D2 lacuna for the ref. — $^{a}$) S (mostly) तुर्वशुं. — $^{b}$) B4 Da D4 सुमहातपाः (for सुतमा°). — $^{c}$) Ś1 K (K1 by corr.) G1.3 द्रुह्यं.

15 Before 15, Ś1 Ñ1.2 B D (except D5; D2 lacuna) ins. ययातिरु°; T G (except G1.3) M3.5 ययातिः. — $^{a}$) Ś1 K G3 द्रुह्य (K1 द्रुहि). — $^{b}$) K (except K2) रूपवर्ण(K0 बलवृत्त-; K3 बलरूप)विनाश(K1 °शि)नीं; B1 °शनीं; S पाप्मानं जरया सह (cf. $4^{d}$, $9^{d}$, $16^{d}$, $26^{d}$). — After $15^{ab}$, S repeats $8^{cd}$, om. $15^{cd}$. — $^{c}$) B5 °स्रेषु. — B5 (hapl.) om. from स्वं up to the end of $16^{b}$.

16 Cf. 4, 9 and 26. — $^{ab}$) B5 om. $16^{ab}$ (cf. v. l. 15). Ś1 Ñ3 °हस्रे ते; D5 °हस्रां ते. K B3 Da Dn D1 पुनर्; Ñ2 B1.4.6 D2.4 तव (for प्रति-). — $^{cd}$) S (except T1 G1.3) om. $16^{cd}$. T1 G3 वै (for ऽहं). K0.3.4 स्वं वहिष्यामि भू°; K2 Ñ3 D5 स्वं चैव (Ñ3 दत्वा स्वं; D5 स्वं वयः) प्रतिपत्स्यामि; Ñ1 B3–6 D2 स्वं चावाप्स्यामि भू°; G1 स्वयं चैव प्रवत्स्यामि.

☞ For st. 17–23, S subst. a passage which, besides containing some additional stanzas, differs from the text in so far that it om. 19 (transposed

द्रुह्युरुवाच ।
न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तज्जरां नाभिकामये ॥ १७
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् ॥ १८
उडुपप्लवसंतारो यत्र नित्यं भविष्यति ।
अराजा भोजशब्दं त्वं तत्रावाप्स्यसि सान्वयः ॥ १९
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं तु चरेयं यौवनेन ते ॥ २०
अनुरुवाच ।
जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥ २१
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं प्रतिपत्स्यसे ॥ २२
प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।
अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ॥ २३

C. 1. 3491
B. 1. 84. 26
K. 1. 78. 26

---

in some S MSS. to some other part of the dialogue; cf. v. l. 19) and interchanges the rôles of Druhyu and Anu, assigning the words of Druhyu to Anu and *vice versa*. The text of the Southern passage (with its variants) is given separately, under v. l. 23 (*q. v.*). D4 includes some stray stanzas of the Southern passage inserted at various points of its own text; they have been ignored here.

17 Ś1 K1 द्रुह्युः; Ko.2–4 द्रुह्य उ°. — a) K (except K2) transp. गजं and रथं. — b) Ś1 Ñ1.3 B1.4.6 D (except D5) वाक्संग(D2 वाग्बंध)श्चास्य (B1m °पि); K2 वाक्सादश्चा°; B3 वाक्संकुंठास्य; B5 वाक्संयमश्च. — d) Ñ1.2 D तां जरां. Ñ3 तज्जराया न कामये.

18 For S cf. v. l. 23. Ś1 K1 om. उवाच. With 18 cf. 7, 11 and 22. — a) Ko.4 यस्त्वं मे; K1 यमेहं (sic); B5 यस्त्वं मद्. — After 18, B (except B4) D (except D2.5) ins.:

829* यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च ।
हस्तिनां पीठकानां च गर्दभानां तथैव च ।
बस्तानां च गवां चैव शिबिकायास्तथैव च ।

19 T1 G1.2.4.5 M3.6–8 read 19, T2 G6 19$^{cd}$ (only), after 828*; G3 om. it, and M6 reads it after 13. — a) Ś1 Ko.1 नोडुप°; K3.4 B6 D2 °संचारो; Ñ3 औडुप°; B3 °संभारो. K2 D5 नोडुपप्लवसंचारो; S यत्रोडुप्लवसंतारः. ❀Dev.: उडुपं तृणकाष्ठादिघटितं । सन्तरणसाधनं [।] तेन प्लवो गमनं न संतारः पारप्राप्तिर्यत्र न तत्र (।) भविष्यसीत्यन्वयः [।]❀ — b) S तत्र (for यत्र). — c) M न (for अ-). Dn अराजभाज°. D2 भोगहीनस् (for भोज°). K3.4 Ñ1.2 B5 °शब्दस्त्वं. Ś1 Ko Dn तं; S तु (for त्वं). — d) K2.4 Ñ3 Dn तत्र प्राप्स्य°; D2.5 तत्र वत्स्य°.

20 For S cf. v. l. 23. With 20 cf. 3 and 8. Before 20, Ko.2 Ñ B (except B4) D (except D5) ins. ययातिरु°. — a) Ś1 K1 Ñ1.2 एवं (for एकं).

21 For S cf. v. l. 23. Ś1 K1 om. उवाच. — d) K (except K2) तज्जरां.

22 For S cf. v. l. 23. With 22 cf. 7, 11 and 18. Ś1 K1 om. उवाच. — a) Ś1 यदि मे; K1 यन्मे त्वं. — c) K2.4 D2 °दोषास्. K1 त्वयोक्ते यः; K3 B3 °योक्ता ये; K4 °योक्तोहं; Dn D1.4 त्वया प्रोक्तः. — d) Ñ3 B4 Da1 त्वां; B1.6 Da2 तां; D2 तान् (for त्वं). Ko.4 Ñ2 Da1 B5.6 °पत्स्यते; K2 °पद्यसे; B1 °पत्स्यसि.

23 In Ś1 the portion of the text from 23 up to 1. 80. 2 is lost on the missing upper half of a fol. — a) Ko Ñ3 B D2 प्रजा च; K3 प्रजा स; K4 राजा च. K3.4 D2 यौवनं. D2 प्राप्य. — b) Ko.3.4 B D2 विनशिष्य° (B4 विनंक्ष्यति ह्यनो).

☞ For 17–23, S subst.:

830* द्रुह्युः ।
(cf. 21$^{ab}$) जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
(21$^{c}$) न जुहोति च कालेऽग्निं न युध्यति च कालतः ।
(21$^{d}$) न च कृत्स्नं करोत्येष तां जरां नाभिकामये ।
ययातिः ।
(22$^{ab}$) यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
(22$^{cd}$) जरादोषस्त्वयोक्तोऽयं तस्मात्त्वं नाभिपद्यसे । [5]
(23$^{ab}$) प्रजाश्च यौवनं प्राप्ता विनशिष्यन्त्यतस्तव ।
(23$^{cd}$) अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ।
(20$^{ab}$) अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
(20$^{cd}$) एकं वर्षसहस्रं वै चरेयं तव रूपधृक् ।
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् । [10]
दत्त्वा च प्रतिपत्स्ये वै पाप्मानं जरया सह ।

C. 1. 3492
B. 1. 84. 27
K. 1. 76. 28

पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि ।
जरा वली च मे तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ २४
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
कंचित्कालं चरेयं वै विषयान्वयसा तव ॥ २५
पूर्णे वर्षसहस्रे तु प्रतिदास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ २६

वैशंपायन उवाच ।

एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यथात्थ मां महाराज तत्करिष्यामि ते वचः ॥ २७
प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ॥ २८
जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ॥ २९

ययातिरुवाच ।

पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ ३०

इति श्रीमहाभारते आदिपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

अनुः ।

($17^{ab}$) न हस्तिनं नरो नाश्वं जीर्णो भुङ्क्ते न पीठकम् ।
($17^{cd}$) वाग्दुर्भगास्य भवति तां जरां नैव कामये ।

ययातिः ।

($18^{ab}$) यो मे त्वं हृदयाज्जातो वयः स्वं न प्रयच्छसि ।

(829*) हस्त्यश्वरथयुग्यानामध्वा न स्यात्कदाचन । [15]
हस्तिनां पीठकानां वा गर्दभानां तथैव च ।
उष्ट्राणां च गवां चैव शिबिकायास्तथैव च ।

यद्वान्यद्वाहनं किंचिद्देवो हन्यात्कचित्कचित् ।
अराजा तव जातश्च भविष्यति च दुर्मते ।

वैशंपायनः ।

प्रत्याख्यातश्चतुर्भिश्च शप्त्वा तान्यद्यदिच्छया । [20]
पूरोः सकाशमगमज्ज्ञात्वा पूरुमलङ्घिनम् ।

[ (L. 1) $G_{1.2.4.5}$ शुचिवद्. — (L. 4) $T_1$ $G_1$ त्वं (for स्वं). $G_3$ (hapl.) om. lines 5–14. — (L. 5) $G_2$ repeats this line after line 14. $G_{1.2}$ (*sup. lin.* as in text) °क्तो मे; $M_5$ त्वयोक्तोहं. $M_{3.5}$ तं; $M_{6-8}$ न (for त्वं). $T_1$ $M_{3.5}$ त्वं ($T_1$ तु) प्रपद्यसे; $G_1$ $M_{6-8}$ प्रतिपत्स्यसे (for नाभि°). — (L. 6) M प्राप्य. — After line 7, $G_{4.5}$ read 19 for the first time. In $G_1$ the sequence from 7–20 is: 7, 15–19, 831*, 8–14, then a repetition of (the three lines) 15, 18 and 19, and finally 20. — $T_2$ $G_2$ ins. after line 7: $G_{1.4.5}$, after the first occurrence of line 19:

831* एवं ब्रुवन्तं शप्त्वाथ ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं चानुमिदं वचनमब्रवीत् ।

On the other hand, $T_1$ ins. after line 7:

832* अनुं पुत्रमथाहूय राजा वचनमब्रवीत् ।

— (L. 8) M अनुदुष्टो प्रपद्यस्व. — (L. 9) $G_1$ यौवनेन त्वदीयेन चरे°. — (L. 12) $T_1$ रथं चाश्वं. M न हस्तिरथनागाश्च. — (L. 14) $T_1$ अनो मे त्वं. — After line 14, $G_2$ repeats line 5. — (L. 15) $T_2$ $G_{4-6}$ °रथमुख्यानां — (L. 16) $T_1$ $G_{1.3}$ यानानां (for हस्ति°). — (L. 17) $M_{6-8}$ °कानां त°. ]

24 $Ś_1$ missing (cf. v. l. 23). $K_1$ (hapl.) om. 24. Before 24, Ñ B $Da_2$ Dn ins. ययातिरु°; S (except $G_3$) ययातिः; $D_2$ has lacuna. — $^a$) $K_4$ $T_2$ $G_{2.4-6}$ मे त्वं (by transp.). $Ñ_3$ वरः (for प्रियः). $K_2$ त्वं मे प्रियतरः पुत्रः; $T_1$ $G_{1.3}$ पूरो प्रियस्त्वं पुत्राणां. — $^b$) $D_5$ $T_1$ वरीयांस्त्वं (by transp.); $T_2$ G M त्वं गरी($G_5$ कनी)यान् ($G_{1.3}$ गरीयान्वै). — $24^{cd}$=(var.) $2^{ab}$. — $^c$) $Ñ_2$ $B_4$ जरावलीढं. Ñ B D (except $D_5$) मां (for मे). $G_3$ तातस्य (for मे तात). — $G_3$ om. $24^e$–$25^b$.

25 $Ś_1$ missing; $G_3$ om. $25^{ab}$ (cf. v. l. 23, 24). With 25 cf. 3, 8 and 20. — $^a$) $B_4$ तस्मात् (for पूरो). $M_{6-8}$ मे प्र- (for प्रति-). — $K_4$ (hapl.) om. $25^{cd}$ and 26; $D_2$ om. $25^{cd}$. — $^c$) S यथाकामं ($G_{1.4-6}$ °कालं; $G_3$ यौवनेन). — $^d$) $G_3$ विषयांस्तव पुत्रक.

26 $Ś_1$ missing; $K_4$ om. 26 (cf. v. l. 23, 25). With 26 cf. 4, 9 and 16. — $^a$) $K_1$ $Ñ_3$ $B_4$ Da ते (for तु). — $^b$) $Ñ_2$ $B_6$ $D_2$ तव; $B_{3.6}$ Dn $D_{1.4.5}$ पुनः (for प्रति-). $G_6$ प्रतिपत्स्यामि. — $K_2$ om. $26^{cd}$. — $^c$) $D_2$ स्वं चावाप्स्यामि भूयोहं.

27 $Ś_1$ missing (cf. v. l. 23). $K_{1.3}$ $D_5$ S om. उवाच; $D_2$ lacuna for the ref. Before $27^{cd}$, $D_4$ marg. ins. पूरुरुवाच. — $^c$) $T_2$ G (except $G_3$) यदात्थ. $M_{3.5}$ त्वं (for मां). — After 27, S ins.:

833* गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात्त्रैलोक्यमन्वशासच्छतक्रतुः ।
गुरोरनुमतं प्राप्य सर्वान्कामानवाप्नुयात् ।

